नूनम् ॥ ७१ ॥ लग्नस्थनंदलवपेन समस्तु मूर्त्या यो वा ग्रहो बलयुतस्तु तथैव मूर्त्तिः। वर्णौ विधोर्नवलवेशसमस्तु बुद्ध्वा जातिं कुलं च विषयान् प्रवदेच्च वर्णम् ॥ ७२ ॥

सूर्य बलवान् होवै तो बालक पिताके तुल्य रूपादिमे होगा, चंद्रमा बली होवै तो माताके सदृश होगा। सूर्य जिसके त्रिंशांशकमे है उसके गुणसदृश पूर्वोक्त ( ग्रहभेदाध्यायोक्त ) ग्रहस्वरूपादिके तुल्य गुणयुक्त बालकका शरीर होगा ॥ ७१ ॥ लग्नमे जिसका नवांशक है उसके तुल्य बालककी मूर्ति होगी अथवा बलवान् ग्रहके सदृश होगी। रग चन्द्रमा नवांशेशतुल्य होता है। जाति, कुल, देशको जानकर फल कहने। जैसे डोमजातियोमे बहुधा काले रंगके, पजाबमे गोरे, पूर्वमे काले, भुटानमे चिपिट नासिका, अंग्रेजोमे सब गौर वर्ण स्वभावसेही होते है ॥ ७२ ॥

लग्नद्रेष्काणवशादङ्गविभागः।

शीर्षं दृशौ श्रुतियुगं च नसाकपोलौ तस्माद्धनुश्च वदनं प्रथमे दृकाणे। कण्ठांशकौ भुजयुगं किल पार्श्ववक्षः क्रोडं च नाभिरिति वा कथितं द्वितीये॥७३॥ बस्तिश्च शिश्नगुदके वृषणावुरू च जानुद्वयं च जघने चरणौ तृतीये। चक्रस्य वाममुदितं सकलं नरस्य याम्यं तथा ह्यनुदितं गदितं ग्रहज्ञैः ॥ ७४ ॥

द्रेष्काणवशसे राशियोके अगविभाग कहते है—प्रथम द्रेष्काणमे लग्नराशि शिर, २। १२ नेत्र, ३। ११ कान, ४। १० नाक, ५। ९ गाल, ६।८ हनु ( ठोडी ), ७ मुख। दूसरे द्रेष्काणमे लग्नराशि कठ, २। १२ कधा, ३। ११ बाहु, ४। १० बगल, ५। ९ हृदय, ६ पेट, ७ नाभि। तीसरे द्रेष्काणमे १ बस्ति, २ लिग, १२ गुदा, ३। ११ वृषण ऊरु, ५। ९ जंघा, ६। ८ घुटने, ७ पैर ये द्रेष्काणके अंगविभाग है। इनमेभी लग्नसे सप्तमपर्यंतके दाहिनी ओरके और ७ से १२ पर्यंत वामांग जानने ७३॥७४॥

अङ्गव्रणादिविचारः।

व्रणो भवेत्पापयुतेऽत्र युक्ते संवीक्षिते लक्ष्म तिलस्तु सद्भिः। स्थिरे स्वभांशे सहजस्तदानीमागंतुकस्तद्विपरीतसंस्थे ॥७५॥

रवौ काष्ठतुर्याग्रिजः सूर्यपुत्रे दृषद्वायुजश्चन्द्रजे भूभवश्च । गराग्न्यस्त्रजो भूमिपुत्रे व्रणस्तत्समांगे विधौ शृंगिनीराब्जजः स्यात् ॥ ७६ ॥ स्थानकेऽर्कहिमरश्मिसंयुते कालपूरुपसमे बलोन्मिते । स्याच्चरादिवशतोऽथवा तदाऽऽगंतुकं तु सहजं तिलाङ्कनम् ॥ ७७ ॥ यत्र त्रयः सौम्ययुता ग्रहाः स्युस्तत्र व्रणस्तत्समराशिदेशे । तद्वद्रिपुस्थो व्रणकृत्खलो वा सदृष्ट-युक्तस्तिललक्ष्मकृत्स्यात् ॥ ७८ ॥

जिस द्रेष्काणके वशसे जो अङ्गविभाग किया है उसके अनुसार पापग्रह है, उस अंगमे ( व्रण ) खोट वा दाग होवै । यदि उसमे शुभग्रह भी युक्त हो या उसको देखता हो तो उस अगमे तिल वा लक्ष्म ( चिह्न ) लाखण होवै । स्वराशिमे अथवा स्थिरराशिमे होवै तो वह व्रणादि जन्मसे ही होगा । इसके विपरीत हो तो आगंतुक जानना ॥ ७५ ॥ सूर्यसे वह व्रणादि काष्ठसे वा चतुष्पदसे, शनिसे पत्थरसे वा वायुसे, बुध हो तो भूमिमे गिरनेसे, मंगल हो तो विष, अग्नि, शस्त्रसे, चंद्रमा हो तो शीगसे वा जल यद्वा जलोत्पन्न वस्तुसे तत्तुल्य अगमे वह व्रण होगा ॥ ७६ ॥ जिस स्थानमे सूर्य चन्द्रमा हैं उसके सदृश कालपुरुषागविभागमे बलके अनुमानसे और चर स्थिरादि वशसे सहज वा आगंतुक व्रणादि कहना ॥ ७७ ॥ जहां बुधसहित तीन ग्रह शुभ हो या अशुभ ग्रह होवैं उसके समान राशि अगमे व्रण करता है । तैसेही रिपुगत पापग्रहभी व्रण करता है । शुभग्रहसे दृष्ट युत होवै तो तिल वा कोई चिह्न करता है ॥ ७८ ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुञ्जराजोदिते च । होरासारे शंभुहोराप्रकाशे जन्माध्यायः पंचमः पूर्ण आसीत् ॥ ७९ ॥

इति श्रीपुंजराजविरचिते शम्भुहोराप्रकाशे सूतिकाध्यायः पञ्चमः ॥ ५ ॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है । यह जन्माध्याय पूर्ण भया ॥ ७९ ॥

इति श्रीशम्भुहोराप्रकाशे माहीधरीभाषाटीकाया सूतिकाध्याय पञ्चम ॥ ५ ॥

---

अथोच्यते द्वादशभावजातं फलानि सत्कोमलवाग्विलासैः ।
शिवादिभिर्यान्युदितानि तानि सम्यक्चमत्कारकराणि नूनम् ॥ १ ॥

अब बारह भावोके चमत्कारिक फल कोमलवाणीके विलसित पदोसे जो शिव आदियोके कहे है निश्चय करके कहे जाते है ॥ १ ॥

तनुभावविचारः ।

रूपं वर्णं साहसं देहमानं चिह्नं जातिः सौख्यदुःखे नरस्य । शीर्षं देहो वा पितुर्मातुरेवं सर्वं वीक्ष्यं लग्नभावे सुधीभिः ॥ २ ॥ सर्वैः खेटैर्यो हि भावो ग्रहो वा दृष्टो भद्रं स्वं प्रदातुं समर्थः । चेल्लग्नेन्दू सर्वखेटैः प्रदृष्टौ पुंसां सूतौ राज्यदौ तौ भवेताम् ॥ ३ ॥ लग्ने प्रदृष्टेऽखिलखेचरेन्द्रैः कुले नृपालोऽरिकुलस्य हन्ता । लीलाविलासैः सहितो नयेन युक्तो बलीयान् विपुलायुषः स्यात् ॥ ४ ॥

तनुभावके विचार है कि, रूप, रंग, साहस, देहमान, चिह्न, जाति, सुख, दुःख, शिर, पिता माताका देह इतने मनुष्यके बुद्धिमान् लग्नभावमे विचारे ॥ २ ॥ जो भाव अथवा ग्रह समस्तग्रहोंसे दृष्ट होवै वह भाव वा ग्रह अपने शुभ फल देनेको समर्थ होता है । यदि पुरुषोके जन्ममे लग्न चद्रमा समस्त ग्रहोसे दृष्ट हो तो वे राज्य देनेवाले होते हैं ॥ ३ ॥ समस्त ग्रह लग्नको देखे तो वह मनुष्य अपने कुलमे श्रेष्ठ (राजा) होता है, शत्रुकुलको मारनेवाला लीलाके विलासोसे युक्त अर्थात् ऐश्वर्यवान् सुखी न्यायवान् बलवान् और दीर्घायु होता है ॥ ४ ॥

चन्द्रे सर्वग्रहैर्दृष्टे राजा राजकुलोद्भवः । धनधान्यसमायुक्तो नीतियुक्तो भवेन्नरः ॥ ५ ॥ लग्नात्सौम्या द्यूनरंध्रारिसंस्थाः क्रूरैर्युक्ता नेक्षिताः स्यात्क्षितीशः । छत्री दंडेशश्चिरायुर्बहूनां स्त्रीणां भर्त्ता निर्भयो वीतरोगः ॥ ६ ॥

चद्रमा सब ग्रहसे दृष्ट होवे तो राजकुलोद्भव राजा, अन्य स्वकुलश्रेष्ठ,धन अन्नयुक्त, नीतियुक्त वह मनुष्य होता है ॥ ५ ॥ लग्नमें ७।८।९ भावोंमें शुभग्रह हो पापग्रहसे युक्त दृष्ट न हो तो राजा छत्रवाला, दंड करनेवाला, दीर्घायु, बहुत स्त्रियोंका भर्त्ता, निर्भय और रोगरहित होता है ॥ ६ ॥

सौम्याः सर्वे लग्नसंस्था यदि स्युर्जातं कुर्युः संततं वै विनीतम् । पापाः सर्वे व्याधिदारिद्र्यशोकैर्भीत्या युक्तं वाथ दुर्भक्षकं च ॥ ७ ॥ लग्नस्थिते सत्खचरे सवीर्ये स्थूलो नरः स्यादबलोऽन्यथा तु । तत्र स्थिते क्रूरयुते सुधांशौ पापेक्षिते शीतरुजान्वितः स्यात् ॥ ८ ॥

समस्त शुभग्रह लग्नमें होवे तो मनुष्यको सर्वदा नम्र करते हैं और पापग्रह रोग दरिद्र शोक भीतिसे युक्त रखते हैं वा अभक्ष्यभक्षी करते हैं ॥ ७ ॥ लग्नमें शुभग्रह बलवान् होवे तो मनुष्य स्थूल होता है, पापग्रह तथा निर्बल ग्रहसे दुर्बल होता है, लग्नमें पापयुत चन्द्रमा पापदृष्ट होवे तो शीतरोगसे वह मनुष्य युक्त रहै ॥ ८ ॥

लग्ने च होराद्वितये च यस्मिन्नर्द्धे स्थितः क्रूरखगस्तु तत्र । शीर्षस्य वामेऽप्यथ दक्षिणे च पीडा प्रवाच्या मनुजस्य नूनम् ॥ ९ ॥ शीर्षस्थाने राहुभौमार्कमन्दाः शीर्षस्थाने वह्निशस्त्राच्च काष्ठात् । मूर्तौ क्रूरः क्रूरलग्नं च दृष्टं दाहो वह्नेश्चेद्विधौ नीरभीतिः ॥ १० ॥

लग्न तथा लग्नकी होरामें पापग्रह होवै तो वह होरा पूर्वदल होवे तो शिरके वाम भागमें,उत्तरदलकी होरा हो तो शिरके दाहिने भागमें पीडा मनुष्यके रहै यह निश्चय जानना ॥ ९ ॥ लग्नद्रेष्काणके विभागमें शिरस्थानमें राहु मंगल व शनि होवे तो शिरस्थानमें अग्नि शस्त्र वा काष्ठसे भय होवे । लग्नमें पापग्रह पापराशिका हो, पापग्रह उसे देखे तो अग्निसे दग्ध होवै, ऐसा चद्रमा लग्नमें होवै तो जलकी भय होवै ॥ १० ॥

आकृतिः प्रकृतिर्दोषा गुणा गुणवयोरसाः ।
पुंस्त्री चेष्टा स्वभावश्च ग्रामादिस्थितिकर्म च ॥ ११ ॥
लग्ननाथवशाद्वापि लग्नसंस्थग्रहादपि ।
वक्तव्यं दैवविदुषा प्राचीनमुनिसंमतात् ॥ १२ ॥

शरीरकी आकृति, स्वभाव, दोष, गुण, अवगुण, अवस्था, रस, पुरुष, स्त्री, चेष्टा, अभ्यास और ग्राम आदिकी स्थिति कर्म ॥ ११ ॥ इतने सब लग्नेशके आकृति प्रकृति गुणादिके अनुसार वा लग्नगत ग्रहके अनुसार प्राचीनमुनिसमत ज्योतिषी कहै ॥ १२ ॥

ग्रहाकृतिः ।

युवा कुजः शिशुः सौम्यः शनिशुक्रौ च मध्यमौ ।
मन्दमार्त्तण्डदेवेज्यफणिनः स्थविरा ग्रहाः ॥ १३ ॥
पित्तं प्रभाकरक्ष्माजौ श्लेष्मा भार्गवशीतगू ।
ज्ञगुरू समधातू च पवनौ राहुमन्दगौ ॥ १४ ॥

ग्रहोंकी आकृति आदि कहते है कि, मगल जवान, बुध बालक, शनि शुक्र मध्यम ( अधड उमर ), शनि सूर्य गुरु राहु बूढे है ॥ १३ ॥ सूर्य मंगलका पित्त धातु, शुक्र चद्रमाका श्लेष्मा, बुध गुरुका समधातु, राहु शनिका वायु धातु है ॥ १४ ॥

लग्नपो वा तथा लग्ने तादृग्वा सबलो ग्रहः । यदा लाभगते भौमे स वृद्धोऽपि युवायते ॥ १५ ॥ यथा लग्नगते सौम्ये युवा बालायते किल । शशिशुक्रौ च लग्नस्थौ नातिवृद्धो न वै युवा ॥ १६ ॥ स्थविराः सबला यस्य ग्रहा लग्नगता यदि । प्रकृत्या स भवेद्वृद्धो मान्यः सर्वजनेषु च ॥ १७ ॥

लग्नेश लग्नमे हो यद्वा बलवान् ग्रह लग्नमे हो और जो लाभस्थानमे मंगल तो बूढाभी मनुष्य जवानके तुल्य होवै ॥ १५ ॥ जैसे लग्नके बुध होनेमे मनुष्य जवानभी बालक समझा जाता है । तैसेही चन्द्रया शनि लग्नमे हो तो न अतिवृद्ध न अतियुवा मालूम पडता है ॥ १६ ॥ जिसके जन्ममे

स्थविर ( बूढे ) ग्रह बलवान् होकर लग्नमे हो तो उसकी प्रकृति बूढी होती है । सब मनुष्य उसको माननीय गिनते है ॥ १७ ॥

यत्रांगस्थौ भानुकुजौ तत्र स्याद्रक्तलाञ्छनम् । शनिराहू च यत्रस्थौ श्यामं तत्र भवेत्किल ॥ १८ ॥ लग्नस्थे च द्वितीये वा जीवे स्यान्मधुरप्रियः । मधुरं वचनं वक्ति सत्यं सर्वहितावहम् ॥ १९ ॥ चन्द्रपुत्रे च तत्रस्थे स नरस्तुवरप्रियः । द्वितीयगे फलं तद्वद्वाच्यं नात्र विचारणा ॥ २० ॥

द्रेष्काणवश कालांगगणनामे जिस अगमे सूर्य मगल हो तहा सुर्ख चिह्न, जहां शनि राहु है तहां निश्चय श्याम चिह्न होगा ॥ १८ ॥ लग्न वा धनभावमे गुरु होवै तो मीठा प्यारा माने तथा मीठे वचन सत्य सबके भलाईके कहे ॥ १९ ॥ बुध तहां १ । २ होवे तो वह मनुष्य कषाय वस्तुप्रिय, होवै । दूसरेमेभी निःसन्देह यही फल कहना ॥ २० ॥

भार्गवश्च तथा चंद्रो लग्नेशो वा विलग्नगः । अम्लक्षारप्रियो नित्यं जायते च द्वितीयगे ॥ २१ ॥ राहुः शनैश्चरः केतुर्यदि ते स्युर्विलग्नगाः । स तीक्ष्णप्रकृतिर्ज्ञेयस्तथा तीक्ष्णरसप्रि[illegible] ॥ २२ ॥ मूर्तीशौ मूर्तिगौ वाऽपि कुजार्कौ यस्य दृश्यते । स क्रोधी जायते नूनं व्यसनी कटुकप्रियः ॥ २३ ॥

शुक्र तथा चन्द्रमा अथवा लग्नेश लग्नमे होवै तो खट्टा तथा क्षार ( लवण आदि ) को नित्य प्रिय माने । दूसरे भावमे हो तौभी यही फल जानना ॥ २१ ॥ यदि शनि राहु केतु लग्नमे हो तो तीक्ष्णप्रकृति होवे तथा तीक्ष्णरसको प्रिय माने ॥ २२ ॥ लग्नेश लग्नमे सूर्य मगलसे दृष्ट हो वा सूर्य मगल लग्नमे हो तो वह मनुष्य क्रोधी और कडुआ रसमे प्रेमवाला होवै ॥ २३ ॥

सौम्यैः खेटैः सांगपैर्लग्नसंस्थैर्यद्वा सौम्यैर्द्यूतगैः स्याच्चिरायुः । अस्तं यातैर्वीर्ययुक्तैश्च पापैर्दुःखी स्वल्पायुः स्वयं वाथ कांता ॥ २४ ॥ लग्नस्थानं चेदसत्खेचराणां जीवेन्दुभ्यां संयुतं शीर्षरोगः । नारीदेहे जन्तुरोगोऽतिसारो वह्नेर्भीतिः

स्वीयदेहेऽथवा स्यात् ॥ २५ ॥ रविभौमौ विलग्नेशौ सबलौ वा विलग्नगौ । वह्निना स विदग्धः स्यात्तथा पित्तेन बाध्यते ॥२६॥

लग्नेशसहित शुभग्रह लग्नमे हो यद्वा सप्तममे शुभग्रह हो तो मनुष्य दीर्घायु होगा । अस्तगत तथा बलवान् पापग्रहोसे दुःखी तथा अल्पायु आप अथवा उसकी स्त्री होवै ॥ २४ ॥ लग्नमे पापराशि हो तहा गुरु चन्द्रमा बैठे हो तो शिरमे रोग होवै और अपने वा स्त्रीके शरीरमे कृमिरोग अतिसार और अग्निभय होवै ॥ २५ ॥ सूर्य मगलसे कोई लग्नेश हो वा लग्नमे हो तो वह मनुष्य अग्निसे दग्ध होवै तथा पित्तरोगसे पीडित रहे ॥ २६ ॥ इति लग्नभावविचारः ॥

अथ द्वितीयभावविचारः ।

द्वितीयकं यद्भवनं धनाख्यं कुटुंबकं तत्पुरुषस्य वक्त्रम् ।
वाणी शुभाणां क्रयविक्रयाश्च सुवर्णमुक्तारजतादिकानाम् ॥ २७ ॥
कोशार्थसिद्धिः सकलं सुधीभिर्धनाभिधाने भवने विचिन्त्यम् ।
लग्नेशयुक्ताः सबलाः शुभाख्याः कोशस्थितास्तत्फलमेव दद्युः ॥२८॥

दूसरा जो स्थान है सो धन, कुटुब, पुरुषका मुख, वाणीसे सुदर अक्षर, मोल लेना, बेचना, सोना, मोती, चांदी आदि तथा खजाना धनकी सिद्धि ये सपूर्ण धनसज्ञक भावमे बुद्धिमानोने विचारने, लग्नेशसहित सभी शुभग्रह बलवान होकर धनस्थानमे उक्त प्रकारके शुभफल देते है ॥ २७ ॥ २८ ॥

धनालये सत्खचरैः प्रदृष्टे वाणी शुभाणां बहुलं धनं च ।
खलैः प्रदृष्टे तनुपे खले वा फलं विलोमात्परिचितनीयम् ॥ २९ ॥
सूर्यारसिंहीसुतसूर्यपुत्रैर्धनालयं तत्सहितं प्रदृष्टम् ।
नरस्तदा स्याद्द्रविणेन हीनः कृशेन्दुना वा सहितं च दृष्टम् ॥ ३० ॥
सुरेज्यपूज्ये धनभावसंस्थे दृष्टे शुभैश्चेद्द्रविणं करोति ।
कोशस्थितः शीतलभानुसूनुश्चन्द्रेण दृष्टो धनहानिकृत्स्यात् ॥३१॥

धनस्थानमे शुभग्रहोकी दृष्टि होवै तो उसकी वाणी सुंदर अक्षरोकी तथा बहुत धन होवै, यदि धनभावमे पापदृष्टि हो अथवा लग्नेश पाप हो तो उक्त फल उलटा जानना ॥ २९ ॥ सूर्य मंगल राहु शनि धनभावमे हो वा उसे देखे तो

मनुष्य धनहीन होवे । क्षीण चंद्रमाके योगदृष्टिसेभी यही फल होना है॥ ३०॥
बृहस्पति धनभावमे शुभदृष्ट होवे तो धन करता है । धनस्थानमे बुध चंद्रमासे दृष्ट होवै तो धनहानि करनेवाला होता है ॥ ३१ ॥

कृशः शशांको धनभावसंस्थो बुधेन दृष्टोऽपि धनादिकानाम् ।
प्रागर्जितानां कुरुते विनाशं नवीनवित्तप्रतिबन्धनानि ॥ ३२ ॥
बुधेन दृष्टो धनभावसंस्थो भृगोः सुतो वित्तकरो नराणाम् ।
स एव सत्खेचरसंयुतो वा दृष्टस्तदानी बहुवित्तकृत्स्यात् ॥ ३३ ॥
मुखस्थितेऽर्के यदि जातकस्य शैलेयरोगोत्थितमत्र चिह्नम् ।
भवेद् ध्रुवं तद्वचनं च मिष्टं नात्यन्तवित्तः कटुकप्रियश्च ॥ ३४ ॥
तत्र स्थिते ज्ञेन युतेऽथवाऽर्के सेवारतः स्यान्न धनस्थिरत्वम् ।
स चेद्युतः स्त्रीखचरैस्तदानी स्त्रीहस्तगं स्वं पुरुषस्य वाच्यम् ॥३५॥
यद्वा पिताऽम्बा सहजाऽऽत्मजस्त्री पितृव्यको मातुलशालकश्च ।
पित्रादिनाथैः सहितो यदा स्यात्तत्तत्करस्थं द्रविणं नरस्य ॥ ३६ ॥

क्षीण चद्रमा धनस्थानमे बुधसे दृष्ट होवे तो पहिलेवालोंके कमाये धनोंका नाश करै, नये कमानेमे प्रतिबध ( अटकी ) पडे ॥ ३२ ॥ बुधमे दृष्ट शुक्र धन भावमे हो तो मनुष्योंका धन करनेवाला होता है । वही शुक्र शुभग्रहसे दृष्ट होवै तो तब बहुत धन करनेवाला होता है ॥ ३३॥ जन्मवालेके धनभावमे सूर्य होवै तो पत्थरसे उत्पन्न रोगसे मुखपर चिह्न होवै तथा निश्चय उसकी वाणी मीठी होवै, धन बहुत न होवे, कटुकरस प्रिय माने ॥ ३४॥ धनस्थानमे सूर्य सहित बुध होवे तो सेवामे तत्पर रहे, धन स्थिर न होवै। वही सूर्य स्त्रीग्रहसे युक्त होवै तो उस पुरुषका धन उसकी स्त्रीके हाथमे होगा ऐसा कहना॥ ३५॥ अथवा पिता, माता, भाई, पुत्र, स्त्री, ताऊ, चाचा, मामा, शालाके हाथमें जिस भावेशसे युक्त हो उसके हाथमे धन होवै ॥ ३६ ॥

पुत्रेशे स्त्रीगृहे पुत्री भगिनी सहजेश्वरे । मातृष्वसा मातुलेशे
पितृव्येशे पितृष्वसा ॥ ३७॥ जनकेशे श्वश्रुहस्ते श्वशुरो वा
गृहेश्वरे । लाभेशे शालकीहस्ते धनं वाच्यमशंकितः ॥ ३८ ॥

उक्त योग जो पित्रादिकोंके हस्तगत धन कहा यह तो धनगत सबुध सूर्यके साथ पुरुषग्रह दृष्टियोगसे है, यदि पुत्रेश स्त्रीराशिमे हो और स्त्रीग्रहसे युक्त दृष्ट होवै तो लडकीके हाथमे, एव तृतीयेशसे बहिनके षष्ठेशसे मांकी बहिनके, लग्नेशसे पिताकी बहिनके ॥ ३७ ॥ दशमेशसे सासके, चतुर्थेशसे ससुरके, लाभेशसे सालीके हाथमे नि:शक उस पुरुषका धन कहना ॥ ३८॥

**क्रूरैर्धनस्थैर्वदनेऽथवांसे नेत्रे श्रुतौ वा व्रणकं विघातः ।**
**विधुंतुदे वा सवितात्मजे स्यात्तत्र स्थिते संग्रहणीरुजार्त्तः ॥ ३९ ॥**
**स्याद्दतुरो दंतरुगर्दितो वा सिंहीसुते चेद्धनभावसंस्थे ।**
**तत्र स्थितेऽब्जे खलु शीतदोषः स्यात्सन्निपाताश्रययुङ्नरः स्यात् ४०**
**तत्र स्थिते क्रूरयुते सिते चेत्काणोऽथवा मंदविलोचनश्च ।**
**मूको द्वितीये त्रिलवे तृतीये स्खलद्गिरः स्यान्मनुजो नितांतम्॥४१॥**
**धनव्ययस्थो भृगुजोऽथवाऽऽरः करोति पुंसां श्रवणप्रपीडाम् ।**
**तत्र स्थितः शीतमयूखमाली दृग्दोषकारी मुनिभिस्तथोक्तः ॥४२॥**

क्रूरग्रह धनभावमे होवे तो मुखपर वा कन्धपर वा नेत्रमे वा कानमे व्रण ( खोट वा चोट ) होगी, राहु वा सूर्य धनभावमे होवे तो सग्रहणीरोगसे पीडित होवै ॥ ३९ ॥ राहु वा केतु धनभावमे होवे तो बडे दातोवाला वा दतरोगी होवे । तहा चन्द्रमा होवे तो निश्चय शीतदोष होगा और मनुष्य सन्निपात ( त्रिदोष ) के आश्रयवाला होवे ॥ ४० ॥ धनभावमे पापयुक्त शुक्र होवै तो एक नेत्रहीन ( काणा ) अथवा मददृष्टि होवै । यह शुक्र दूसरे द्रेष्काणमे होवे तो गूगा, तीसरेमे होवै तो टूटी जबान ( हेकला ) वह मनुष्य सर्वदा होगा ॥ ४१ ॥ धन वा व्ययस्थानमे शुक्र वा मगल हो तो मनुष्योके कानमे पीडा करता है । तहा दूसरे वा बारहवेमे चद्रमा होवै तो नेत्रदोष करनेवाला मुनियोने कहा है ॥ ४२ ॥

**कोशस्थे चेद्देवपूज्येऽथवा ज्ञे वाग्मी स स्यात्पूरुषः सौम्यवक्त्रः । केतौ तत्रस्थे तदा दीर्घवक्त्रो नूनं प्रोक्तः शंकराद्यैर्महद्भिः ॥४३॥ धनस्थितः सत्वचरः खलो वा शत्र्वालयस्थो**

रिपुणा युतो वा । करोति मर्त्यं मुखरोगयुक्तमेवं विधुश्चेत्स-
लिलाच्च भीतिम् ॥ ४४ ॥ धनस्थितश्चेद्रविजस्तमो वा स्त्री-
खेचरेशेन युतस्तदानीम् । म्लेच्छैर्निपादैर्गणिकाजनैश्च
गांधर्वनादेन धनव्ययः स्यात् ॥ ४५ ॥ यदा धनेशोऽथ धन-
स्थितो वा भौमस्तदा वित्तविनाशदः स्यात् । धनञ्जयाद्वापि
च तस्कराद्वा शत्रोः क्षितीशान्मनुजस्य नूनम् ॥ ४६ ॥
विषेण वा तु शस्त्रेण तथा रक्तप्रकोपतः । तन्मृतिर्विहिता
लोके क्षितिजेन धनस्थिते ॥ ४७ ॥

धनभावमे गुरु अथवा बुध होवै तो वह मनुष्य युक्तियुक्त बात करने-वाला मुलायम ( प्रसन्न ) मुख होवै, धनभावमे केतु होवै तो लबामुख होवै ऐसा शकरादि आचार्योंने निश्चय कहा है ॥ ४३ ॥ धनभावमे शुभ वा पाप ग्रह शत्रुराशिका अथवा शत्रुयुक्त होवै तो मनुष्यको मुखरोगमे युक्त करता है इस प्रकार चन्द्रमा होवै तो जलसे भी भय होवै ॥ ४४ ॥ धनस्थानमे शनि वा राहु स्त्रीग्रहसे युक्त होवै तो म्लेच्छ निषाद ( भील ) वेश्या जनोसे तथा गायनके शब्दके आनन्दमे धन व्यय होवै ॥ ४५ ॥ यदि धनेश मगल हो अथवा धनभावमे मंगल होवै तो वित्तका नाश अग्नि चोर शत्रु और राजासे मनुष्यके धनका निश्चय नाश करता है ॥ ४६ ॥ ॥ मंगल धनस्था-नमे होवै तो विषसे वा शस्त्रसे अथवा रुधिरके कोपसे ससारमे उसकी मृत्यु कही है ॥ ४७ ॥ इति धनभावविचारः ॥

अथ सहजभावविचारः ।

अथ प्रवक्ष्ये सहजालयस्य प्रोक्तं फलं यच्छशिशेखरेण ।
तत्स्यात्तृतीयं त्वथ बाहुसंज्ञं दुश्चिक्यसंज्ञात्र तदेवमुक्तम् ॥ ४८ ॥
सहोत्थितानां च पराक्रमाणां दास्यादिकानां च सुखासुखं हि ।
अंबापितृव्याम्बकमातुलानां फलं विचिन्त्यं सहजे सुधीभिः॥ ४९ ॥

अब तृतीय भावका फल जो महादेवजीने कहा है उसको कहता हू—तीसरा भाव तृतीय, बाहुसंज्ञक, दुश्चिक्य सज्ञक है ॥ ४८ ॥ भाई, परा-

क्रम, दासी आदियोंका सुखासुख, माता, चाचा, ताऊ, उनकी पत्नी, मामा इनका विचार विद्वानोंको तीसरे भावसे करना चाहिये ॥ ४९ ॥

**सौम्यैर्युक्तं वा शुभं सौम्यदृष्टं दुश्चिक्यं स्यात्सर्वतो मङ्गलाय ।**
**एवं पापैर्दृष्टयुक्ते खलर्क्षे नूनं पुंसां भ्रातृलब्धेरभावः ॥ ५० ॥**
**मंदेऽनुजर्क्षे क्षितिसूनुदृष्टे नरस्य नश्यंत्यनुजाश्च जाताः ।**
**जीवोशनोभ्यां यदि तत्र दृष्टे सकृच्छुभं स्यादनुजेषु नूनम् ॥ ५१ ॥**

तीसरे भावमें शुभ राशि हो उसमें शुभग्रह हो अथवा शुभदृष्ट हो तो तद्भावोक्त सभी कामोंके मंगलके लिये होते है । ऐसेही पापराशि पापयुक्त वा पापदृष्ट होवे तो भाईके लाभका अभाव होवै॥५०॥ शनि तीसरे स्थानमें मंगलसे दृष्ट होवै तो मनुष्यके भाई नष्ट होवै, उसपर गुरु शुक्रकी दृष्टि होवे तो भाइयोंमें थोडा शुभ अर्थात् कुछ भाई रहे ॥ ५१ ॥

**चेद्गीष्पतौ विक्रमपे च तत्स्थे सहोत्थिताना बहुल सुख स्यात् । दुश्चिक्यगे सूर्यसुते तदानीं भाग्याधिकः स्यात्पुरुषो विशेषात् ॥ ५२ ॥ बाहुस्थितश्चेद्रविजोऽसुरेण युक्तस्तदानीं कुनखित्वकं तु । दक्षे करे दारुभवं विघातं करोति वा वायु-समुद्भवार्तिम् ॥ ५३ ॥ रविर्यदा हस्तगतः कुजो वा तदा-ऽस्थिभग विषज भयं च । करोति दाहं ज्वलनाच्च चिह्नं शुभे-क्षिते त्वग्विरलत्वमेति ॥ ५४ ॥**

यदि बृहस्पति एव तृतीयेश तीसरा होवै तो भाइयोंका बहुत सुख होवै और शनि तीसरा होवै तो पुरुष विशेषतर भाग्यशाली ( ऐश्वर्यवाला ) होवै ॥ ५२ ॥ तीसरा शनि राहुसे युक्त होवै तो कुनखी होवै अथवा दाहिने हाथपर लकडीकी चोट अथवा वायुसे उत्पन्न पीडा करता है ॥ ५३ ॥ तीसरा सूर्य अथवा मंगल होवै तो हड्डी टूटे और विषकी भय, दाह, अग्निसे चिह्न ( खोट ) करता है, यदि वह शुभदृष्ट होवै तो उस स्थानकी खालमें भिन्नता होवै ॥ ५४ ॥

नंदांशा ये विक्रमस्थानसंस्थाः प्रालेयांशुक्षोणिपुत्रप्रदृष्टा । तत्संख्याः स्युर्भ्रातरो वै भगिन्यस्त्वन्यैर्दृष्टा हौरिकैः कल्पनीयाः ॥ ५५ ॥ तत्स्थे शनौ ज्ञेन कुजेन दृष्टे करोति नष्टं च सहोत्थितानाम् । कुजेन दृष्टे सहजेऽब्जवर्गे स्युर्मानवानां सहजाः सरोगाः ॥५६॥ चेदत्र भानौ नवमे स्वगेहे तदा विनश्यंत्यखिलाः सहोत्थाः । एकश्चिरायुः सहजः कदाचिन्नृणां भवेद्भूपतिना समो वा ॥ ५७ ॥

जितने नवांशक तृतीयभावमे चद्रमा मगलसे दृष्ट होवे उतने भाई और अन्य ग्रहोसे बहिने ज्योतिषियोने कल्पना करनी ॥ ५५ ॥ तीसरे शनिपर बुध मगलकी दृष्टि हो तो भाइयोका नाश करता है तीसरेमे चद्रमाके वर्गका शनि होवै तो मनुष्योके भाई रोगसहित रहते है ॥ ५६ ॥ यदि तीसरा सूर्य हो अथवा नवममे स्वगृही होवै तो समस्त भाई नष्ट होते है । कदाचित् एक भाई बचे तो वह दीर्घायु यद्वा राजाके समान होता है ॥ ५७ ॥

चन्द्रे खलानां त्रिनयेन दृष्टे भ्रातृप्रणाशो न शुभेक्षितश्चेत् । सूर्योऽग्रजान् हन्ति कुजोऽनुजातान्पूर्वापरोत्थान्सहजान्यमो हि ॥ ५८ ॥ दुश्चिक्यस्थे लोहितांगे च बाहौ चिह्नं दद्यात्क्रूरदृष्टो नरस्य । शस्त्राघाताद्वा सुधीभिः प्रवाच्या पित्तोद्भूता गंडमालाऽनुजस्य ॥ ५९ ॥

चन्द्रमा तीन पापग्रहोसे दृष्ट हो शुभग्रह उसे न देखे तो भाइयोका नाश होवै । तीसरा सूर्य आगेवालोको, मगल पीछेवालोको और शनि आगे पीछे दोनोको नाश करता है ॥ ५८ ॥ तीसरा शनि क्रूरदृष्ट होवे तो बाहुमे चिह्न शस्त्राघातसे देता है अथवा छोटे भाईको पित्तसे उत्पन्न गडमाला होवै ऐसा बुद्धिमानोसे कहने योग्य है ॥ ५९ ॥

तत्र क्रूराः शत्रुयुक्ताः सहोत्थं स्वल्पं सौख्यं बाहुपीडा नरस्य । पक्षाघातो वायुजो भ्रातृपीडा तस्य स्त्री स्याद्धस्तबद्धार्पणेषु ॥ ६० ॥ चेद्विक्रमस्थेऽर्कसुते प्रवाच्यौ द्वौ भ्रातरौ

गर्भयुतौ विनष्टौ । सहोत्थपक्षाश्रित एव नूनं द्रव्यस्य हानिर्मनुजस्य वाच्या ॥६१॥ लाभे महीजे मदनेऽर्कपुत्रे विधुन्तुदश्चेन्नवमे तदानीम् । हानिः प्रवाच्या विबुधैर्नराणां भ्रातृद्वयस्य त्रितयस्य वापि ॥६२॥ गुरुस्तृतीये भृगुजो बुधो वा सौख्यं त्रयाणां च सहोत्थितानाम् । वाच्यं खलैर्दृष्टयुतोऽथ वा चेद्द्वयोर्विनाशं विबुधैस्तदानीम् ॥ ६३ ॥

तृतीय भावमे पापग्रह शत्रुयुत हो तो भाइयोका सुख अल्प मिले तथा मनुष्यके बाहमे पीडा रहे अथवा वायुसे उत्पन्न पक्षाघात रोग होवै, भाइयोको पीडा होवै, उसकी स्त्री हस्तबद्ध ( कृपण ) दानादियोमे होवै ॥ ६० ॥ तीसरे शनि होवै तो उसके दो भाई गर्भहीमे नष्ट हुए होगे और निश्चय है कि, भाइयोके पक्षके आश्रयसे मनुष्यके धनकी हानि कहनी ॥ ६१ ॥ लाभभावमे मगल सप्तममे शनि और यदि नवममे राहु होवै तो पडितोने उस मनुष्यके दो वा तीन भाइयोकी हानि कहै ॥ ६२ ॥ तीसरा गुरु अथवा बुध वा शुक्र होवै तो तीन भाइयोका सुख होवै । तृतीय भाव पापदृष्ट और पापयुक्त होवै तो पडितोने दो भाइयोकी हानि कहनी ॥ ३६ ॥

पुण्ये विधौ रविसुते सहजे कुजाद्वा सौम्यग्रहेक्षितयुतेऽप्यसुरे तृतीये । नाशो नरस्य च तदा भगिनीत्रयस्य स्याल्लाञ्छनं तु भुजयोरथ वापि कुक्षौ ॥ ६४ ॥ भगिन्येका राहुदृष्टः सितो विषभयान्मृता । तत्रस्थः शनिना दृष्टः सर्पाद्भयमथो वदेत् ॥ ६५ ॥ षष्ठस्थानस्थैर्ग्रहैर्मातुलानां प्रोक्तं नूनं यादृशं यत्फलं तत् । दुश्चिक्यस्थैस्तादृशं वाऽनुजानां वाच्यं सर्वं होरिकैर्बुद्धिमद्भिः ॥ ६६ ॥

नवमस्थानमे चद्रमा तीसरा शनि हो अथवा मगलसे तीसरा राहु शुभग्रहोसे दृष्ट युत होवै तो मनुष्यकी तीन बहिनोका नाश होवै तथा बाहुमे अथवा कुक्षिमे लाछन ( चिह्न ) होवै ॥ ६४ ॥ तीसरा शुक्र राहुसे दृष्ट होवै तो एक बहिन विषकी भयसे मरी होगी । तीसरे शुक्रपर शनिकी दृष्टि होवै तो सर्पसे भय कहना ॥ ६५ ॥ जैसा फल छठे भावस्थ ग्रहोसे मामाओको

कहा है वैसाही फल निश्चय तीसरे भावस्थ ग्रहोसे भाइयोंके लिये बुद्धिमान् ज्योतिषियोंने कहे है ॥ ६६ ॥ इति तृतीयभावविचारः ॥

अथ चतुर्थभावविचारः ।

**वक्ष्ये तुर्यस्थानसंस्थं फलं तद्वक्षस्थानं पूरुषाणां निरुक्तम् ।**
**अंबाबंधुक्षोणिमित्रालयानां सर्वान्नानां ग्रामयुग्वाहनानाम् ॥ ६७ ॥**
**वापीकूपक्षेत्रभूमीरुहाणां तुर्यस्थाने कल्पनीयं महद्भिः ।**
**चेत्तुर्यर्क्षं सद्ग्रहैर्युक्तदृष्टं सर्वं सौख्यं तद्गृहस्थं तदानीम् ॥ ६८ ॥**

अब चतुर्थस्थानके फल कहता हूं—जो पुरुषोका वक्षस्थान कहा है तथा अबा, बन्धु, पृथ्वी, मित्र, गृह, समस्त अन्न, ग्रामसहित वाहन ॥ ६७ ॥ बावली, कुआ, खेती, वृक्ष इनका विचार चतुर्थ स्थानमे करना । यदि चौथा भाव शुभग्रहोसे युक्त दृष्ट हो तो चतुर्थभावसबधी सब सुख होगे ॥ ६८ ॥

**तुर्यस्थिते तुर्यपतौ सवीर्ये शुभं फलं यच्छति तद्गृहोत्थम् ।**
**अस्तं गतो नीचगतो जितो वा फलं विलोमात्परिचिन्तनीयम् ॥६९॥**
**लग्ने गुरुः खे[illegible] ।**
**[illegible] स्यात्परिवारकस्य ॥७०॥**
**सूर्योऽथवाऽऽरः सबलश्चतुर्थे पित्तज्वरो वा व्रणरुग्जनन्याः ।**
**भवेन्नितान्तं मनुजो व्रणार्तः पार्श्वेऽथवाऽऽरे दहनेन दग्धः ॥ ७१ ॥**

चतुर्थेश बलवान् चतुर्थस्थानमे हो तो चतुर्थभावसबधी शुभ फल देताहै। यदि चतुर्थेश अस्त हो नीचगत हो तो उक्तफल विपरीत विचारना ॥ ६९ ॥ लग्नमे गुरु, दशम शनि, तीसरे राहु होवै तो उसकी माता शीघ्र मरे । लग्न व्यय और सप्तममे सभी शुभ और पाप ग्रह होवै तो परिवारका क्षय करै ॥७०॥ सूर्य वा मगल बलवान् चतुर्थमे होवै तो माताको पित्तज्वर वा फोडेका रोग होवै । मगलसे मनुष्य व्रणपीडित वा अग्निसे दग्ध होताहै॥७१॥

**मातामहस्य पक्षेऽपि विषशस्त्रकृता व्यथा । जीवे च सर्वकल्याणं यदा स हिबुके वसेत् ॥ ७२ ॥ चतुर्थस्थिते सूर्यपुत्रेऽसुरे वा जनित्री भवेद्वायुदोषार्तियुक्ता । हता काष्ठपाषाणघातेन वा सा स्थिते तत्र चेद्यामिनीशे सरोगा ॥ ७३ ॥ तरु-**

**प्रपातेन जलेन तस्या निजात्मना वापि मृतिः सहोत्थे। चन्द्रे समन्दे रविणा युते वा रोगार्दिता स्याज्जननी नरस्य ॥ ७४ ॥**

उक्त योगोसे मातामह ( नाना ) के पक्षमेभी विष शस्त्रसे पीडा होती है । यदि गुरु चतुर्थ होवै तो मातामहादियोको सर्वप्रकार मगल होवे ॥ ७२ ॥ चतुर्थ शनि वा राहु होवै तो माता वायुदोषसे पीडित रहे । अथवा लकडी पत्थरसे उसको चोट लगे । चतुर्थमे चंद्रमा होवै तो माता रोगसहित रहे ॥७३॥ राहु शनिसे युक्त चन्द्र अष्टम या तीसरेमे हो तो माताका मरण पेडसे गिरके, वा जलमे डूबके आत्मघातसे देते है । चद्रमा शनिसहित अथवा सूर्यसहित चतुर्थमे होवै तो उस मनुष्यकी माता रोगपीडित रहे ॥ ७४ ॥

**चतुर्थे भवने क्रूरः पृच्छकस्य यदा ग्रहः । ग्रामे वा नगरे वापि गृहे तस्य सुखं नहि ॥ ७५ ॥ मातृस्थानगते भौमे दृश्यते शनिराहुणा । चन्द्रदृष्टिर्भवेत्तत्र माता स्याद्व्यभिचारिणी ॥७६ ॥**

जन्ममे वा प्रश्नमे प्रष्टाके चौथे भावमे पापग्रह होवै तो उसको ग्राम नगर वा घरमे सुख न मिले ॥ ७५ ॥ चौथा मंगल शनि राहुसे दृष्ट होवै और तहां चन्द्रमाकी दृष्टिभी होवै तो उसकी माता व्यभिचारिणी होवै ॥ ७६ ॥

**तुर्ये शुक्रेऽब्जे च नीरं पटु स्यात्सौम्ये मिश्रं कूपवाप्यादिकेषु । मन्दे राहौ तिक्तमिज्येऽतिमिष्टं भानौ भौमे कष्टलभ्यं जलं हि ॥ ७७ ॥ तुर्यस्थेऽर्के तुर्यपे नो दृढं स्याद्गेहं सौम्ये चित्रितं नव्यमिन्दौ। शुक्रे रम्यं राहुमन्दे च जीर्णं भौमे दग्धं देवपूज्ये दृढं च ॥७८॥ मन्दे राहौ वीर्ययुक्तेऽस्थियुक्तं भस्मांगारैर्भस्मभाण्डैर्दृषद्भिः । सूर्यस्तुर्यांशाश्रयी कष्टकृत्स्यात् स्थानभ्रष्टोऽन्याश्रयी भौमशन्योः ॥ ७९ ॥**

कूप, बावडी, तालाव आदिके प्रश्नादिमे लग्नसे चतुर्थ शुक्र चद्रमा होवें तो स्वच्छ, बुधसे मिश्रित, शनि राहुसे कडुआ, गुरुसे अतिमीठा जल मिलेगा । सूर्य एवं मगल हो तो कष्टसे जल मिलेगा ॥ ७७ ॥ ऐसे मकान आदिमे चतुर्थेश सूर्य चौथा होवै तो दृढ नहीं होगा, बुधसे चित्रोवाला, चंद्र-

मासे नवीन, शुक्रसे रमणीय, शनि राहुमे पुराना, मंगलमें दग्ध, गुरुसे दृढ जमना ॥ ७८ ॥ शनि राहु बलवान् होवे तो हड्डी भस्म अगारे फूटे बर्तन और पत्थरोंसे युक्त होवै । सूर्य चौथे भावके अंशमे बैठा हो तो कष्ट करे, मगल शनिसे स्थानसे भ्रष्ट होकर अन्य स्थानका आश्रय करनेवाला होवै ७९

तुर्येश्वरे तुर्य्यगतेऽथवाऽब्जे सिते धनं रूप्यमयं धनं स्यात् ।
चेन्मंदिरेऽन्नं बहुलं तदानीं स्युर्मानवानां प्रबला रसाश्च ॥ ८० ॥
स्वर्णान्वितं ज्ञे तपने च मुक्ता कांस्यान्वितं रत्नयुतं सुरेज्ये ।
ताम्रं त्रपुर्वा कुसुतेऽर्कपुत्रे लोहायुधं वाऽस्थियुतं त्वगौ स्यात्॥८१॥

चतुर्थेश शुक्र अथवा चन्द्रमा चतुर्थ होवै तो उस घरमे चांदी अधिक धन होवै, अन्नभी बहुत होवै और मनुष्योंको रसभी बहुत होवै ॥८० ॥ बुध होवै तो सुवर्ण, सूर्यसे मोती, गुरुसे कांसी रत्न, मगलसे तांबा, पीतल, शनिसे लोहा शस्त्र और राहुसे हड्डियोंसे युक्त घर होगा ॥ ८१ ॥

जीवेऽसुरालयगते हिमगौ सिते च नीराशये शशिसुते यदि वेष्टकासु । सूर्ये चतुष्पदपदेऽप्यथ बाह्यभूमौ सौरेऽसुरेऽग्निनिकटे कुरुते च वस्तु ॥८२॥ तुर्यस्थितैर्वीर्ययुतैर्नभोगैः पूर्णं प्रवाच्यं फलमुक्तमत्र । अर्द्धं फलं मध्यबलैश्च तुच्छं नीचास्तसंस्थैर्ननु जातकज्ञैः ॥ ८३ ॥

जन्म वा वस्तुस्थानप्रश्नमे गुरु चन्द्रमा शुक्रमेंसे कोई चतुर्थ भावमे होवै तो जलाशयमे, बुध होवै तो ईटोंमे, सूर्य चतुर्थमे होवै तो बाहर भूमिमे, शनि वा राहु हो तो अग्निके समीप वस्तु करते है ॥ ८२ ॥ चतुर्थभावमे ग्रह पूर्णबली होवै तो उक्त फल पूर्ण कहना । मध्यबलमे आधा और हीन-बलमे नीचमे अस्तमे बहुतही अल्प वह फल कहना ॥ ८३ ॥

शुभग्रहैस्तुर्यगतैः सवीर्यैस्तातस्य सौख्यं जननीसमेतम् ।
सुधीः सुखी साधुजनानुयातो भवेन्नरो विष्णुपरायणश्च ॥ ८४ ॥
तुर्यस्थितः पापनभश्चरश्चेत्सौख्यं न शीतद्युतिना प्रदृष्टः ।
इनस्तदा मातृसुखोज्झितः स्यादेवं शुभश्चेद्विपरीत एव ॥ ८५ ॥

चौथे भावमे बलवान् शुभग्रह होवै तो मातासहित पिताको सुख मिले तथा वह मनुष्य सद्बुद्धिवाला, सुखी, साधुसगतिवाला और विष्णुभक्तिमे तत्परभी रहे ॥ ८४ ॥ यदि चौथे भावमे पापग्रह होवै तो माता पिताका सुख न होवै । सूर्य चतुर्थ चद्रदृष्ट हो तो मातृसुखसे रहित होवै । शुभ ग्रह ऐसा होवै तो विपरीत फल होगा ॥ ८५ ॥

सूर्ये खलानां त्रितयेन दृष्टे शुभैरदृष्टे जनकस्य नाशः ।
भवेत्तथैवं खलु यामिनीशे भवेन्नराणां जननीविनाशः॥८६॥
मेषूरणे सूर्यसुतोऽर्कदृष्टः कुजस्तमो वा जनकस्य नाशम् ।
करोति पुंसां विपुलं दरिद्रं हृदामयं वै निजपक्षहानिम्
॥ ८७ ॥ तीक्ष्णोपघातं खलसंयुतश्चेत्स्कंधे च कुक्षौ हृदये
तदानीम् । एवं चतुर्थे कुसुतेऽग्निदाहं मन्देऽनिलार्ति त्वपरै-
र्विघातम् ॥ ८८ ॥ तुर्ये क्रूरो भवेत्तस्य माता स्याद्द्वित्रि-
संख्यया। मातृस्थानगते सौम्ये तदैका जननी भवेत् ॥ ८९ ॥

सूर्य तीन पापोसे दृष्ट हो और शुभ ग्रहोसे अदृष्ट होवै तो पिताका नाश होवै । ऐसेही चन्द्रमा पापत्रयसे दृष्ट और शुभोसे अदृष्ट होवै तो माताका नाश होवै ॥ ८६ ॥ दशम शनि सूर्यसे दृष्ट हो अथवा मगल वा राहु दशम सूर्यसे दृष्ट होवै तो पिताका नाश करता है । तथा मनुष्योको बडा दरिद्र, हृदयमे रोग और अपने पक्षकी हानि करता है ॥ ८७ ॥ चतुर्थभाव पापयुक्त होवै तो तीखी चोट कंधामे वा कुक्षिमे वा हृदयमे करता है, मगल चतुर्थमे अग्निदाह, शनि वायुपीडा, अन्य ग्रहोसे चोट कहनी ॥ ८८ ॥ चौथा पापग्रह होवै तो उसकी दो तीन माता होगी । शुभग्रहसे एकही होगी ॥ ८९ ॥ इति चतुर्थभावविचारः ॥

अथ पंचमभावविचारः ।

अथ प्रवक्ष्ये किल पंचमस्य फलं नराणामुदरं तदेव ।
संतानगर्भस्थितिनीतिसंस्था मंत्रादिसिद्धिर्विनयश्च विद्या ॥ ९० ॥
बुद्धिप्रबंधः सुतभे समस्तं विचिन्त्यमेतन्ननु जातकज्ञैः ।
सर्वं शुभं वीर्ययुते तदीशे वीर्योज्झिते सर्वमशोभनं स्यात् ॥ ९१ ॥

अब पचम भावविचार कहते है कि, मनुष्योका यह उदरस्थान है इसमे संतान, गर्भस्थिति, नीतिकी स्थिति, मंत्रादिकी सिद्धि, विनय, विद्या॥ ९० ॥ बुद्धिप्रबंध इतने सबधी समस्त फल जातकज्ञोने विचारने । पंचमेश बलवान् होवै तो उक्त सभी अच्छे और निर्बल होनेमे सभी अशुभ होते है ॥ ९१ ॥

चेद्भानावुदरस्थिते तु मनुजः कोपान्वितः स्यात्तदा दग्ध-स्तत्र कृशानुनाऽथ चरणे दक्षे शृगालाश्वजा । पीडा वा विषवह्निजा हतसुतो भौमेऽग्निशस्त्रव्यथा प्रोक्ताऽङ्गेषु मृत-प्रजस्तु नितरां स्यान्मानवो दुःखितः ॥ ९२ ॥ स्वर्भानावु-दरस्थिते कृमिरुजा वा वातगुल्मान्वितो मन्देऽप्येवमथेन्दुना यदि युते प्लीहायुतः स्यान्नरः । आदित्ये स्थिरधीर्विधौ तु चपला क्रूरा कुजे ज्ञे समा सद्बुद्धिर्धिषणे सिते मृदुमति-स्तीक्ष्णाप्यगौ वाऽर्कजे ॥ ९३ ॥

यदि सूर्य पंचम भावमे होवै तो मनुष्य क्रोधी होवै, दाहिना पैर अग्निसे दग्ध होवै अथवा स्यार वा कुत्तेसे उत्पन्न पीडा अथवा विष वा अग्निसे उत्पन्न पीडा होवै । मगल पचम होवै तो अग्नि वा शस्त्रसे पीडा पूर्वोक्त अंगोमे होवै तथा बराबर सतान मरती रहै, मनुष्य दुःखित रहै ॥ ९२ ॥ राहु पंचम होवै तो कृमिरोग वा वातगुल्मरोगसे युक्त रहै, शनिसेभी ऐसाही फल जानना। यदि चद्रमासे युक्त होवै तो प्लीह ( फीहा ) रोगसे मनुष्य युक्त रहै । सूर्य पचम हो तो स्थिर बुद्धि, चंद्रमासे चपल, मगलसे क्रूर, बुधसे सामान्य, गुरुस उत्तम बुद्धि, शुक्रसे कोमल, शनि राहुसे तीक्ष्ण बुद्धि । केतु राहुके तुल्य जानना ॥ ९३ ॥

धीस्थैः सत्खचरैः प्रपञ्चरचको दक्षोऽतिगूढः सुधीः सन्मंत्रा-ऽमरसेवनेषु निरतो नूनं सुशीलः सदा । क्रूरैस्तत्रगतैरसन्मनु-सुराराध्यो विगूढः कुधीमर्त्यः स्यादशुचिः प्रपञ्चरचनासक्तः सतां निन्दकः ॥ ९४ ॥ सूर्यः पित्तरुजा ज्वरेण गरलैनैवात्म-जस्थो यदा मर्त्यानां विनिहन्ति गर्भपतनाद्यैर्वा तदा

सततिम् । मन्दोऽगुः क्रूमिणाऽनिलेन दृषदा काष्ठेन नीरेण वा शैलेयेन कुजो व्रणेन यदि वा शस्त्रेण रक्तार्तिना ॥ ९५ ॥

पचम भावमे शुभग्रह हो तो प्रपंच रचनेवाला चतुर होवै । उसके मनकी कोई न जानसके, सद्बुद्धि उत्तम ( मंत्र ) सलाह जाने । यद्वा अच्छे मत्र एवं देवताके सेवनमे तत्पर रहै, निश्चय सर्वदा उत्तम शीलवाला होवै । यदि पचममे पापग्रह होवै तो क्रूरमत्र क्रूरदेवताका आराधन करे । मनमे बात छिपे नही, दुर्बुद्धि, अपवित्र, प्रपचरचनामे आसक्त तथा वह मनुष्य सज्जनोकी निन्दा करनेवाला होवै ॥ ९४॥ सूर्य पचम हो तो पित्तरोग, ज्वर, विष और गर्भपतनादिसे सतति हानि करे । शनि वा राहु होवै तो कृमि, अग्नि, पत्थर, काष्ठ, जल, पर्वतोत्पन्नवस्तुसे सन्ततिकी हानि होवै, मगल पचम होवै तो व्रणसे अथवा शस्त्रसे यद्वा रुधिरसबंधी पीडासे सततिकी हानि होवै ॥ ९५ ॥

कन्यापत्यः पुत्रगेऽब्जे बुधे वा कन्यापुत्रैः संयुतो भार्गवेण ।
सत्पुत्रैःस्यात्संयुतो देवपूज्ये मर्त्योऽपत्यात्सौख्ययुक्तो नितांतम् ९६
क्रूरैः खेटैर्दुःखयुक्तो नरः स्यात्पुत्रस्थश्चेद्धंति सूर्योऽग्रजातम् ।
पश्चाज्जातं सूर्यसूनुर्निहन्ति सिंहीसूनुर्हंति पूर्वापरोत्थम् ॥ ९७॥
भूमीपुत्रो नंदनस्थानसंस्थो जातं जातं नन्दनं वा निहन्ति ।
चेत्संदृष्टो देवपूज्येन नूनं दैत्येज्येन स्यात्तदा पूर्वजातम् ॥ ९८ ॥

पचमभावमे चन्द्रमा वा बुध होवै तो मनुष्यकी कन्याही सतति होवै । शुक्रसे कन्या पुत्र सभी होवै । गुरु पचम होवै तो सत्पुत्रोसे युक्त होवै, संततिके सुखसे सर्वदा युक्त रहे ॥ ९६ ॥ क्रूरग्रह पंचम होनेसे मनुष्य सतति पक्षसे दुःखयुक्त रहै । पंचम सूर्य आगेके पुत्रोका, शनि पीछेके पुत्रोका और राहु पहिले पिछले सभीका नाश करता है ॥ ९७॥ मंगल पचम हो तो जितने पुत्र होते जॉय उन सभीको मारता रहता है । यदि वह बृहस्पतिसे वा शुक्रसे दृष्ट होवै तो पहिलेके पुत्रोका नाश करता है, पीछेके बच जाते है ॥ ९८ ॥

सुताधीशः सुतस्थानं नेक्षते सद्ग्रहोऽपि वा । यदा क्रूरयुतो दृष्टस्तदा गर्भच्युतिं वदेत् ॥ ९९ ॥ सुखे सपापे भृगुजेऽस्तसंस्थे स्वस्थे विधौ संततिवर्जितः स्यात् । यद्वा खलर्क्षे

खलयुक्तदृष्टे सौम्यैरदृष्टे सुतभे नरः स्यात् ॥ १०० ॥ धीस्थे मंदे चानपत्यत्वमेति गर्भस्रावो भूसुते चेत्तदानीम् । सूर्ये तत्रस्थे मृतापत्यभाजो राहौ केतौ स्यात्कुपुत्रो नरस्तु ॥ १०१ ॥

पंचमेश वा शुभग्रह पंचम भावको न देखे और यदि क्रूरग्रहसे भाव दृष्ट युक्त होवे तो गर्भ गिरना कहना ॥ ९९ ॥ चतुर्थमें पापग्रह सप्तममें शुक्र दशममें चन्द्रमा होवे तो संततिसे वर्जित रहै । अन्य जातकोंमें इस योगका नाम वंशच्छेत्ता है । अथवा पंचममें पापराशि पापग्रहसे युक्त दृष्ट हो शुभग्रह उसे देखे तोभी वही फल होता है ॥ १०० ॥ पंचमभावमें शनि होवे तो अपुत्र होता है " अन्य ग्रन्थोंमें एकमात्र पुत्र होना लिखा है, स्वगृही शुभयुक्त दृष्ट होनेसे पुत्रवान् होनाभी लिखा है " मंगल पंचम होवे तो गर्भच्युतिको करता है । सूर्य पंचम जिसका हो उसके पुत्र मरते है । राहु केतु पंचम हो तो मनुष्यके कुपुत्र होते है ॥ १०१ ॥

चेत्पद्मिनीशे सुतभावसंस्थे नरस्य पुत्रत्रितयं तदा स्यात् ।
हन्त्यग्रजातं शुभवीक्षिते चेत्सौख्यं भवेत्तस्य सुतद्वयस्य ॥ १०२ ॥
चेत्पंचमर्क्षे समराशिवर्गे बुधेन वा सूर्यसुतेन युक्ते ।
सितेन शीतद्युतिनेक्षिते वा कन्याप्रजः स्यान्मनुजो नितांतम् ॥ १०३ ॥
सिताब्जवर्गे सुतभे समर्क्षे ताभ्यां प्रदृष्टे बहुदारिकाः स्युः ।
तत्र स्थिते चेद्विषमर्क्षके वा पुत्रा भवेयुर्मनुजस्य नूनम् ॥ १०४ ॥

सूर्य पंचम होवे और उसे शुभग्रह देखे तो तीन पुत्र होवे उनमेंसे पहिलेवालेका नाश करे पीछेके दोका सुख मनुष्यको होवे ॥ १०२ ॥ पंचममें समराशिका वर्ग हो और बुध अथवा शनिसे युक्त होवे अथवा शुक्र चन्द्रमासे दृष्ट होवे तो मनुष्य सर्वदा कन्या संतानवाला होवे ॥ १०३ ॥ पंचममें सम राशि शुक्र चंद्रमाके वर्गकी हो शुक्र चंद्र उसे देखे तो बहुत कन्या होगी । यदि पंचममें विषम राशि होवे तो निश्चय मनुष्यके पुत्र होवे ॥ १०४ ॥

सितस्य भांशे भृगुजेन दृष्टे बहून्यपत्यानि तथा हिमांशोः ।
यद्वेन्दुशुक्रेऽन्ययुते सुताख्ये तथेक्षिते वा विधुभार्गवाभ्याम् ॥ १०५ ॥

**सौरस्य भांशे सुतभेऽब्जयुक्ते वा मंदयुक्ते शशिनि प्रदृष्टे ।**
**पुनर्भुवासंभवदत्तकश्च पुत्रः प्रवाच्यो मनुजस्य नूनम् ॥ १०६ ॥**
**तथैव मन्दे शशिसौम्ययुक्ते क्रीतः सुतः स्यान्मनुजस्य नूनम् ।**
**ज्ञेनेक्षिते नो रविभूमिजाभ्यां भांशेऽथवा क्षेत्रसमुद्भवः स्यात् १०७॥**
**जीवादीनां सद्ग्रहाणां च दृष्ट्या सर्वं भद्रं लाभधीस्थैश्च सौम्यैः ।**
**वीर्येणाढ्या प्रीतियुक्तांगना स्यात्क्रूरैर्वाच्या प्रीतिहीनाऽप्यसत्त्वा॥ ८**

पंचममे शुक्रकी राशि नवांशक हो उसे शुक्र देखे तो बहुत सतान होवैं । ऐसेही चंद्रमासेभी फल है । यद्वा चद्रमा शुक्र गुरुसे पचमभाव युक्त हो तथा चंद्रमा शुक्रसे दृष्ट हो तो वही फल होगा ॥ १०५ ॥ पचममे शनिकी राशि नवांशक हो तहा चद्रमा हो अथवा शनिसे युक्त चद्रमासे दृष्ट होवै तो पुनर्भुवा ( दूसरे घरकी स्त्री ) से अथवा दत्तक ( किसीका दिया ) पुत्र मनुष्यका कहना यह निश्चय है ॥ १०६ ॥ ऐसाही शनि, चंद्रमा तथा बुधसे युक्त होवै तो मनुष्यका निश्चय क्रीत ( मोल लिया ) पुत्र होवै । यदि बुधसे दृष्ट हो सूर्य मगलसे दृष्ट न हो वा उसकी राशि नवाशमे हो तो क्षेत्रज ( परस्त्रीसे ) पुत्र होवै ॥ १०७ ॥ पंचमभावमे गुरु आदि शुभग्रहोकी दृष्टिसे पचमभावसवधी सपूर्ण फल मंगल होवै । पंचमभाव तथा लाभभावमे शुभग्रह होवै तो स्त्री बलवान् और प्रीतिसे युक्त होवै तथा पापग्रहोसे प्रीतिसे रहित और निस्तेज होवै ॥ १०८ ॥

**पुत्रस्थाने संस्थिता नंदभागा यावत्संख्यैः पापखेटैः प्रदृष्टाः । गर्भा नश्यंत्येव तावत्प्रमाणाः सत्खेटानां तत्र नो वीक्षणं चेत् ॥ १०९ ॥ यावत्संख्यानां नभस्थानगानां पुत्रस्थाने दृष्टिरस्तीति केचित् । तावत्संख्यासंततिः स्यान्नृसंज्ञैः पुत्रास्तस्मिन्कन्यकाः स्त्रीनभोगैः ॥ ११० ॥ तत्तुल्याः स्युस्तत्र ये नंदभागाः सौम्यैः खेटैर्वीक्षितास्ते द्विनिघ्नाः । ज्ञेयाः क्लिष्टाः पापखेटैः प्रदृष्टा मिश्रामिश्रैः संततिः खेचरेन्द्रैः ॥ १११ ॥**

पंचमभावमे जितने नवाशक पापदृष्ट हो उतने गर्भ नष्ट होते हैं परंतु उनपर शुभदृष्टि न हो तब यह फल है ॥ १०९ ॥ किसीका मतहै कि, पंचम

भावमे जितने ग्रहोकी दृष्टि हो उनमे जितने पुरुषग्रहोकी दृष्टि है उतने पुत्र, जितने स्त्रीग्रहोकी दृष्टि है उतनी कन्या होगी ॥ ११० ॥ जिन शुभग्रहकी दृष्टि है वे बली हो तो उस संख्यासे द्विगुण पुत्र होवै । जितने पापग्रहकी दृष्टि हो उतने गर्भका क्लेश और मिश्रसे फलभी मिश्रित जानना ॥ १११ ॥

यत्संख्येऽङ्के पुत्रपे तावती स्यात्संख्या यावद्भिः खलैः खेचरेन्द्रैः । वीक्ष्यंते वै तन्मिता एव गर्भा लीयंते सत्खेचरैश्चेच्छुभं हि ॥ ११२ ॥ एतत्प्रोक्तं श्रीशिवेनैव साक्षाद्दुर्गायै तद्भानुना चारुणाय । सत्यं प्रोक्तं नान्यथा चिंतनीयं होराविद्भिः खेचरेन्द्रैश्च वाक्यम् ॥११३॥ पुत्रस्थानांकेन तुल्या तथात्र संख्या केचिद्धौरिकेन्द्रा वदंति । धीस्थे भौमे पुत्रनाशः खभस्थे सौम्याख्ये वा पुत्रसौख्यं विलंबात् ॥ ११४ ॥ धीस्थे शुक्रेऽब्जेऽथवा सूर्यपुत्रे वाच्या पुत्रस्योदरे वायुजार्तिः । तत्रस्थौ चेच्छुक्रराहू तदानीं पुत्रस्य स्याद्रक्तपित्ते कुजे तु ॥ ११५ ॥

जितने सख्याके राशिमे पुत्रभावेश शुभदृष्ट हो उतनी सख्या गर्भकी शुभ और पापग्रहदृष्टि हो तो उतने गर्भोकी हानि होती है॥ ११२ ॥ यह विचार साक्षात् शिवजीने दुर्गाके पास कहा, वही सूर्यने अरुणसे कहा इस कारण वह सत्य कहा है । होरा जाननेवालोने ग्रहोकरके सत्य जानना अन्यथा चिंतन न करना ॥ ११३ ॥ कोई ज्योतिषी पुत्रभाव राशिकी जो सख्या है उसके तुल्य सतान कहते है यह राशिबलके अनुसार है । पचम मगल पुत्रनाश करता है । यदि दशम शुभग्रहभी हो तो विलबसे पुत्रसुख होता है ॥ ११४ ॥ पंचममे शुक्र चन्द्रमा अथवा शनि होवै तो पुत्रके पेटमे वायुसे उत्पन्न पीडा कहनी तथा पंचममे शुक्र राहु होवै तौ भी वायुसे उत्पन्न पीडा होवै और मंगल हो तो पुत्रको रक्तविकार पित्तका विकार कहना ॥ ११५॥

बुद्धिस्थाने जीववर्गे यदा वा सौम्यक्षेत्रे वापि सत्खेटवर्गे । सौम्यैर्दृष्टे त्वौरसः पुत्रकः स्यादेवं क्रूरैः खेचरैर्वैपरीत्यम् ॥१६॥ रविस्त्वेकपुत्रं त्रयं वा प्रदद्याद्विधुः कन्यकायुग्मकं वा

चतुष्कम् । प्रदद्यात्कुजः पुत्रकाणां त्रयं च बुधः पुत्रिकापंचकं वा चतुष्कम् ॥ ११७ ॥ सुतानां गुरुः पंचकं वा चतुष्कं सितो दारिकाणां चतुष्कं च षट्कम् । शनिस्त्वेकपुत्रं सुतायुग्मकं तु प्रवाच्यं ग्रहाणां युतेर्वीक्षणाद्वा ॥ ११८ ॥

पंचमस्थानमें गुरुका वर्ग हो अथवा बुधकी राशि वा किसी शुभग्रहका वर्ग हो और शुभग्रहोंसे दृष्ट होवे तो औरस पुत्र (विवाहितासे यथाविधि उत्पन्न) होगा, क्रूर ग्रहोंसे विपरीत जानना ॥ ११६ ॥ पहिले जो प्रत्येक ग्रहके पंचमगत फल कहे हैं उनमें विशेष शुभग्रहकी दृष्टि और योग, ग्रहबल, राश्यादिवर्गके अनुसार फल कहते हैं कि, सूर्य उक्त प्रकारका पंचममें हो तो एक वा तीन पुत्र देता है । चंद्रमा दो वा चार कन्या, मंगल तीन पुत्र, बुध चार वा पांच कन्या, गुरु चार वा पांच पुत्र, शुक्र चार वा छः कन्या, शनि, एक पुत्र दो कन्या, उक्त प्रकार होनेपर देता है ॥ ११७ ॥ ११८ ॥ इति पंचमभावविचारः ॥

## अथ षष्ठभावविचारः ।

वक्ष्ये षष्ठस्थानसंस्थं फलं तत्क्रोडं प्रोक्तं मानवानां शिवाद्यैः । तुर्याघ्रीणां क्रूरकर्माऽऽमयानां संग्रामाणां मातुलानां रिपूणाम् ॥ ११९ ॥ चिंता शंका सर्वमेतद्विचिंत्यं शत्रुस्थाने हौरिकैर्बुद्धिमद्भिः । तत्पे तत्स्थे वीर्ययुक्ते शुभे वा तत्स्थानस्थं शोभनं सर्वमेव ॥ १२० ॥

अब छठे भावमें स्थित फल कहते हैं—यह भाव मनुष्योंका पेटसंज्ञक शिवादियोंने कहे है, इसमें चतुष्पद, क्रूरकर्म, रोग, संग्राम, मामा, शत्रु ॥ ११९ ॥ इतनोंकी चिंता शंका सब शत्रुस्थानमें बुद्धिमान् ज्योतिषी विचारै । षष्ठेश छठे भावमें हो वीर्यवान् हो अथवा शुभ होवे तो उस स्थानोक्त समस्त फल शुभ होता है ॥ १२० ॥

शत्रुस्थानं सौम्यभं सौम्ययुक्तं सौम्यैर्दृष्टं शोभनं संप्रदिष्टम् । यद्वा क्रूरैः संयुतं क्रूरदृष्टं क्रूरक्षेत्रं नैव तच्छोभनं स्यात् ॥ १२१ ॥ चन्द्रो वा भृगुजः सुरेज्यशशिजौ वीर्यान्वितोऽरिस्थितस्तद्गेहं बहुगोधनेन सहितं वा सौरभेयैर्धनैः । सूर्यो

वा रुधिरो यदा पशुमयं वाऽजाविकं चोष्ट्रजं मदोऽगुश्च शिखी तदा नरगृहे स्यात्सौरभीणां धनम् ॥ १२२ ॥

छठे भावमे शुभग्रहकी राशी हो शुभयुक्त हो शुभग्रहोंमे दृष्ट हो तो तद्भावोक्त फल शुभ कहा है । पापयुक्त पापदृष्ट पापराशि हो तो शुभ न होवै ॥ १२१ ॥ चन्द्रमा शुक्र गुरु बुध इनमेंसे कोई बलवान् छठे भावमे हो तो उस मनुष्यका घर गोधन वा बैलोंसे युक्त रहे । सूर्य वा मंगल होंवे तो पशुमय भेड बकरी ऊंट रहे । शनि राहु केतुमेसे कोई होंवे तो घरमें गोधन बहुत होवै ॥ १२२ ॥

शनिस्तमो वाऽरिगृहस्थितश्चेत्स्यादप्रजत्वं खलु मातुलस्य । काष्ठाश्मघातेन चतुष्पदा वा तरुप्रपातेन जलेन मृत्युः ॥ १२३ ॥ सूर्योऽथ वाऽऽरो रिपुभावसंस्थः शस्त्राग्निघातस्त्वथवाग्निदग्धम् । करोति मर्त्यस्य च मातुलस्य विषोत्थदोषेण विदूषितं वा ॥ १२४ ॥ चंद्रे शुक्रे ज्ञेऽथवा शत्रुसंस्थे कन्यापत्यो मातुलः स्यान्नरस्य । वीर्याढ्येज्ये सुप्रजाः सौख्ययुक्तः पुत्रापत्यो भ्रातृसौख्यान्वितः स्यात् ॥१२५॥ पुण्ये षष्ठे विक्रमे पापखेटाः स्वल्पं सौख्यं सोदराणां प्रवाच्यम् । पापैः पीडा मातुलानामरिस्थैः क्रूरैर्ज्ञेया विक्रमे सोदराणाम् ॥१२६॥

शनि राहु छठे भावमे होवै तो उसका मामा अपुत्र होवै तथा काठ पत्थरके चोटसे वा चौपायोंसे यद्वा वृक्षसे गिरकर वा जलमे डूबकर मृत्यु जाननी ॥ १२३ ॥ सूर्य वा मंगल छठे भावमे होवै तो मनुष्यके मामाको शस्त्र अग्नि प्रहार अथवा अग्नि दग्ध करता है अथवा विषसे उत्पन्न दोषसे दूषित करता है ॥ १२४ ॥ चंद्र शुक्र अथवा बुध शत्रुभावमे होंवे तो उसके मामाकी कन्याही संतति होगी । बलवान् गुरु छठा होवै तो उसका मामा सुखयुक्त पुत्रसंततिवाला भाइयोंके सुखसे युक्त होवै ॥ १२५ ॥ नवम, छठे, तीसरे भावमे पापग्रह हो तो भाइयोंका सुख अल्प मिलैगा ऐसा कहना तथा पापग्रहोंसे मातुलोंको पीडा होती है । छठे पापसे मामाको, तीसरेसे भाईको पीडा होवै ॥ १२६ ॥

स्त्रीखेचरैः शत्रुगृहोपयातैः सौख्यं प्रवाच्यं भगिनीसमुत्थम्। मातृष्वसासंभवकं सवीर्यैः सौम्यैः प्रवाच्या पतिपुत्रयुक्ता ॥ १२७ ॥ दुःखेनाढ्याऽरिस्थितैः पापखेटैर्मिश्रैर्मिश्रा जातकज्ञैः प्रवाच्या। यज्जातीयः खेचरो यस्य षष्ठे तज्जातीया वैरिणस्तत्पतिर्वा ॥ १२८ ॥ शत्रुः सूर्ये क्षत्रियोऽब्जे स्वकीयः शत्रुस्थे चेद्भूसुते स्यात्तुरुष्कः। सौम्ये नारी देवपूज्येऽग्रजातः शुक्रे वेश्या राहुमन्देऽन्त्यजश्च ॥ १२९ ॥

छठे भावमे स्त्रीग्रह होवै तो बहिनसे सुख मिलै, तहां शुभग्रह बलवान् हो तो पतिपुत्रवाली माकी बहिन (मौसी) से सुख मिलै ॥ १२७ ॥ शत्रुस्थानमे पापग्रह होवे तो बहिन तथा मौसी दुःखयुक्त और मिश्रितग्रह हो तो मिश्रित फल जातकज्ञ कहै। जिनके छठे भावमे जिस जातिका ग्रह हो उनके उसी जातिके वैरी होंगे। छठेमे कोई ग्रह न हो तो भावेशके जातिके जानने ॥ १२८ ॥ सूर्यसे क्षत्रिय, चद्रमासे अपना मनुष्य, मगलसे तुरुक, बुधसे स्त्री, गुरुसे ब्राह्मण, शुक्रसे वेश्या, राहुशनिसे चाडाल शत्रु जानना ॥ १२९ ॥

स्वर्भानौ वा सूर्यजे शत्रुसंस्थे तत्कट्यां स्याच्छ्यामलं लाञ्छनं च। तत्र स्थानेशेऽप्यथो वायुना वा तन्नारीणां चिह्नमेतत्प्रवाच्यम् ॥ १३० ॥ शत्रुस्थे क्षितिजेऽथवा दिनकरे शस्त्राभिघातो व्रणो मेहो वा मनुजस्य वह्निविषजा पीडाऽस्थिभंगोद्भवा। यद्वा रक्तसमुद्भवाऽप्यतितरां पुंसां रमण्यास्तु वा जंघायां गलकेऽथ दक्षिणपदे चिह्नं भवेन्नान्यथा १३१

राहु वा शनि छठा होवै तो उसकी कटिस्थानमे काला चिह्न (लाखण) होवै। षष्ठेश शनि और राहुसे युक्त होवै तो उसकी स्त्रीकी कमरमे वायुकृत पीडा वा चिह्न होवे कहना ॥ १३० ॥ छठे स्थानमे मगल वा सूर्य होवै तो शस्त्रसे चोट व्रण अथवा प्रमेह अथवा अग्नि विषसे उत्पन्न पीडा मनुष्यको होती है अथवा हड्डी टूटनेसे पीडा होती है वा रुधिरसे उत्पन्न अतिपीडा अथवा स्त्रीके जंघामे कठमे वा दाहिने पैरमे चिह्न होता है, इसमें अन्यथा नही ॥ १३१ ॥

**षष्ठे भौमेऽस्तेऽप्यगौ मातृपक्षाद्वैकल्यः स्याच्चापवादेन मर्त्यः ।**
**शत्रुस्थानं भानुना युक्तदृष्टं कट्यां शूलं शत्रुनाशो नरस्य॥१३२॥**
**षष्ठे भानौ मंत्रिणा युक्तदृष्टे शत्रोर्भीतिर्वा नरस्य स्त्रियाश्च ।**
**अर्द्धांगादेर्नाशनं वा विकारो वाच्यः कट्यां शृङ्गिभिः काष्ठतो वा१३३**

छठा मंगल सप्तम राहु होवै तो माताके पक्षसे मनुष्य अपवादसे विकल होवै । छठा भाव सूर्यसे युक्त वा दृष्ट होवै तो कमरमें शूल रहै तथा उस मनुष्यके शत्रु नाश होवैं ॥ १३२ ॥ छठा सूर्य गुरुसे युक्त वा दृष्ट हो तो मनुष्यकी वा उसकी स्त्रीको शत्रुकी भय होवै, अर्द्धांग आदिकसे विकार या मरण कहना, कमरमें सींगवालेसे वा काष्ठसे विकार कहना ॥ १३३ ॥

**शत्रुस्थोऽब्जो ज्ञोऽथवा देवपूज्यः पुंसां नूनं स्वल्पमृत्युं विधत्ते । तत्रस्थौ वा मन्दराहू कुजो वा नष्टो वाच्यो मातुलो दुष्टयुक्त्या ॥ १३४ ॥ खस्थे चन्द्रे गीष्पतौ वित्तसंस्थे द्वंद्वं वाच्यं मातुलानां त्रयं वा । षष्ठे भौमेऽब्जेऽथवा मातुलः स्यादेकोऽकस्माच्छत्रुभीत्या व्यथार्तः ॥ १३५ ॥ शत्रुस्थाने यदा शुक्रस्तदा मातृष्वसुः सुखम् । त्रयाणां च द्वयोर्वापि वक्तव्य दैववेदिना ॥ १३६ ॥**

शत्रुस्थानमें चंद्रमा बुध वा बृहस्पति होवै तो मनुष्योंको अल्पमृत्यु देता है । तहां शनि राहु वा मंगल होवै तो उसके मामा दुष्ट युक्तिमें नष्ट हुए कहना ॥ १३४ ॥ दशम चंद्रमा दूसरा बृहस्पति होवै तो उसके मामा दो अथवा तीन होंगे। छठा मंगल अथवा चंद्रमा होवै तो एक मामा होवै तथा अकस्मात् शत्रुकी भयसे व्यथासे पीडित रहै ॥ १३५ ॥ यदि छठा शुक्र होवै तो माकी बहिन ( मौसी ) का सुख दो वा तीनका ज्योतिषी कहै ॥ १३६ ॥ इति शत्रुभावविचारः ॥

अथ सप्तमभावविचारः ।

**फलं प्रवक्ष्ये किल सप्तमस्य बस्तिः स्मृता सा मनुजस्य तस्मात् ।**
**वादप्रयाणागमनं कलत्रं वीक्ष्यं वणिज्यं व्यवहारकं च ॥ १३७ ॥**

शुभं गृहं शुभेक्षितं शुभैर्युतं च शोभनम् ।
भवेत्खलक्षकं युतेक्षितं खलैस्तु तन्न सत् ॥ १३८ ॥

अब सप्तम भावके फल कहते है कि, यह मनुष्यका वस्तिस्थान है इससे विवाद, गमन, आगमन, स्त्री, वणिज (व्यौपार) का विचार करना ॥ १३७॥ भावमे शुभराशि शुभग्रहसे दृष्ट युत होनेमे उक्त विचार सब शुभ, पापराशि पापदृष्टि योगसे उक्त विचार अशुभ होते है ॥ १३८ ॥

जीवे शुक्रेऽर्के विधौ गौरवर्णा नारी भौमे रक्तवर्णा प्रवाच्या ।
ईषच्छ्यामा नीलवर्णा बुधे वा मन्दे राहौ श्यामवर्णा सुधीभिः १३९
सूर्ये वाच्या कालजीर्णा बुधेऽब्जे बाला शुक्रे यौवनारेऽप्यतीता ।
जीवे रम्या पुत्रसूः सद्गुणाढ्या नारी मन्दे सैंहिकेयेऽतिवृद्धा॥ १४०॥

गुरु शुक्र सूर्य चद्रमामेसे कोई सप्तम होवै तो स्त्री गोरे रगकी कहनी । बुधसे थोडी श्याम वा नीलवर्णकी, शनि राहुसे कृष्णवर्णकी स्त्री पडित कहे॥ १३९॥ सूर्य सप्तम हो तो बेसी अवस्थावाली, बुध चद्रमासे सर्वदा छोटी अवस्थाकी, शुक्रसे युवावस्थाकी, मगलमे गतयौवना मध्य अवस्थावाली, गुरुसे रमणीय एवं पुत्र जननेवाली, सुगुणयुक्त, शनि राहुसे अतिबूढी स्त्री होगी॥ १४०॥

क्लीबा मन्दे सैंहिकेये प्रवाच्या चन्द्रे शुक्रे स्त्रीस्वभावाऽस्त-भावात् । अन्यैः खेटैरंगना पुंस्वभावा द्यूने होराशास्त्रविद्भिः स्वबुद्ध्या ॥ १४१ ॥ सौम्यैर्युक्तं सौम्यभं सौम्यदृष्टं वाच्यं पुंसां श्वश्रुपक्षोद्भवं च । सौख्यं स्त्रीणां मिश्रखेटैर्विमिश्रं जायागेहं क्रूरखेटैर्न किञ्चित् ॥ १४२ ॥ पत्नीस्थाने शुक्रवर्गे सितेन दृष्टे यद्वा सौम्यवर्गे च तेन । पुंसां वाच्यं शं च वह्वंग-नानां यद्वा जीवे चैकपत्नीसमुत्थम् ॥ १४३ ॥

शनि वा राहु सप्तम होवै तो स्त्री क्लीव कहनी, चद्रमा शुक्रसे सप्तम भावसे राश्यंशके अनुसार स्त्रीस्वभाववाली तथा अन्य ग्रहोमे पुरुषोके जैसे स्वभाव-वाली स्त्री, होराशास्त्र जाननेवाले विशेषतः अपनी बुद्धिसे कहे ॥ १४१ ॥ सप्तममे सौम्यराशि सौम्यग्रहसे दृष्ट होवे तो पुरुषोको सासके पक्षमे तथा स्त्री-पक्षमे सुख तथा स्त्रियोकोभी सासके पक्षसे सुख कहना । शुभ पाप मिश्रित हो

तो फलभी मिश्रित कहना । सप्तममे पापराशि पापग्रहकी दृष्टियोगमे माम आदि पक्षका सुख न होगा ॥ १४२ ॥ सप्तमभावमे शुक्रका राश्यादि वर्ग हो उसपर शुक्रकी दृष्टि हो अथवा शुभवर्ग शुभदृष्ट हो तो बहुत स्त्रियोंका सुख कहना, गुरुके वर्ग दृष्टि योगसे एक स्त्रीका सुख कहना ॥ १४३ ॥

शुक्रेन्द्वीज्ये द्यूनगे शुक्रदृष्टे द्वाभ्यां चैकेनैव वा पूरुषस्य । वैषां गेहे चोपगे वीक्षिते वा भावैर्दुष्टाः सन्ति नार्यः सगर्वाः॥१४४॥ द्यूनेऽर्के क्षितिजे नरस्य रमणी पित्तव्रणेनान्विता दग्धा वा विषवह्निना यदि तदा वा बस्तिरोगान्विता । चन्द्रे शीर्ष-रुजान्विता च सततं शुक्रे तु किञ्चित्कृशाऽथो वन्ध्यत्व-विदूषिता क्षितिसुते वाच्या विदंता कृशा ॥१४५॥ द्यूनस्थे-ऽर्कसुतेऽथ जैमिनिसुते पुंसः पुरंध्री भवेत् काष्ठाश्मायसका-दिना विनिहता तुर्याङ्घ्रिणा वा हता । यद्वा वातरुजान्विता च सततं नूनं च वा चञ्चला तत्कट्यां च समादिशेन्माति-वरैः श्यामं तथा लाञ्छनम् ॥ १४६ ॥

शुक्र चद्रमा गुरु सप्तमेमे शुक्रदृष्ट तीनोमेसे दो वा एकभी होवे वा इनकी राशिमे हो वा इनसे दृष्ट हो तो उस पुरुषकी स्त्रिये भावसे दुष्ट अहकारयुक्त है ऐसा कहना ॥ १४४ ॥ सप्तममे यदि सूर्य वा मगल होवै तो मनुष्यकी स्त्री पित्तव्रणसे युक्त होवे अथवा विष अग्निसे दग्ध होवै अथवा बस्ति नाभिके नीचेके स्थानमे रोगयुक्त रहे, चंद्रमा होवै तो शिरके रोगसे युक्त सर्वदा रहे, शुक्रसे थोडा कृश रहै, मगलसे बांझपनसे दूषित, दतरहित और कृश कहनी ॥ १४५ ॥ सप्तममे शनि वा राहु होवै तो पुरुषकी स्त्री वेश्या होगी। काष्ठ, पत्थर लेहोसे ताडित अथवा चतुष्पदमे ताडित स्त्री होगी अथवा वातरोगसे युक्त सर्वदा निश्चय उसकी स्त्री रहै । अथवा चचला होवे तथा बुद्धिमान् उसकी कमरमे श्याम ( दाग ) लाञ्छन कहे ॥ १४६ ॥

यादृशं तनुगतैर्ग्रहैः फलं तादृशं तु खलु तस्य योषितः । चिन्तनीयमखिलं सचिह्नकं बुद्धिमद्भिरपि दैवचिन्तकैः ॥१४७॥

**द्यूनस्थितेऽर्के म्रियते पुरन्ध्री प्रसूतिदोषेण तथा ज्वरेण ।**
**वा सन्निपातेन कृशानुना वा यद्वाऽतिसारेण विषेण वाऽपि ॥१४८॥**
**तथा विधौ भूमिसुतेऽस्तसंस्थे व्रणेन यद्वाऽप्युदरामयेन ।**
**मन्देऽस्तसंस्थे कृमिणा जलेन यद्वा गृहेशी म्रियतेऽब्जवक्त्रा॥१४९॥**

जिस प्रकार लग्नस्थित ग्रहोंसे पुरुषके फल कहे है तैसेही सप्तमभावस्थ ग्रहोसे उसकी स्त्रीको बुद्धिमान् ज्योतिषी विचारके कहै ॥ १४७ ॥ सप्तम स्थानमे नीचादिगत सूर्य होवे तो पतिपुत्रवती पत्नी प्रसूतिदोषसे तथा सन्निपातसे वा ज्वरसे वा अग्निसे वा अतिसारसे अथवा विषसे मरे ॥ १४८ ॥ ऐसा चद्रमा वा मगल सप्तम हो तो व्रणसे अथवा उदररोगसे मरे । शनि सप्तम हो तो कृमिरोगसे वा जलसे कमलके समान मुखवाली घरकी स्वामिनी वा स्त्री मरे ॥ १४९ ॥

**राहौ द्यूनगृहस्थिते तु पशुभिर्वा शस्त्रघातैस्तथा**
**डाकिन्या निजकर्मणा तु युवतेः केतौ सचन्द्रेऽप्यगौ ।**
**नीरोत्थैश्च विकारकैश्च नियतं वा नीरमध्ये मृतिः**
**प्लीहाद्यैः शिशिरामयैः क्षययुतैश्चन्द्रे सपापे भवेत् ॥ १५० ॥**

राहु सप्तम होवे तो पशुओसे वा शस्त्रोंके घातसे तथा डाकिनी ( यक्षिणी ) आदिके दोषसे अपनेही कर्मके बहानेसे स्त्री मरे । चद्रमायुक्त राहु वा केतु सप्तम होवे तो जलसे उत्पन्न विकारोसे वा जलके बीचमे निश्चय मरण होवै। चंद्रमा सपाप सप्तममे हो तो प्लीहा ( पिलही ) आदि रोगोंसे, शीतरोगोसे वा क्षयरोगोसे युक्त स्त्रीका मरण होवै ॥ १५० ॥

**खेटान्रन्ध्रस्थानसंस्थान्समीक्ष्य तद्वद्द्यूनस्थानसंस्थान्स्वबुध्या ।**
**वाच्यं यत्नेनैव तत्तत्फलं हि होराविद्भिः पण्डितैः शास्त्रदृष्ट्या१५१**
**द्यूनस्थैश्चेत्क्रूरखेटैस्तदा स्यात्स्वल्पं सौख्यं चांगनानां बहूनाम् ।**
**सौम्यैः खेटैस्तत्रगैर्मानवस्य जाया चैका सौख्ययुक्ता प्रवाच्या१५२॥**

अष्टमस्थानगत तथा सप्तमस्थानगत ग्रहोको देखके अपनी बुद्धिसे होराशास्त्रके पडित शास्त्रदृष्टिसे यत्नपूर्वक फल कहै ॥ १५१ ॥ सप्तममे क्रूरग्रहोसे

बहुत स्त्रियोंका भी थोडा सुख मिलता है। शुभग्रह नहीं हो तो मनुष्यकी एक स्त्री सुखयुक्ता कहनी ॥ १५२ ॥

द्यूने सौम्यैः पूरुषो मन्मथाढ्यः क्रूरैरेवं चाल्पकामः प्रवाच्यः ।
क्लीबैः क्लीबत्वं समाप्नोति सूर्ये जायामृत्युर्जीविता चेत्सरोगा ॥ १५३ ॥
स्वर्भानौ चेद्द्यूनगे पापदृष्टे पापैर्युक्ते नैव पत्नीयुतिः स्यात् ।
संभूता वा म्रीयते स्वल्पकालात्सौम्यैर्युक्ते वीक्षिते वा विलंबात् १५४

सप्तममें शुभग्रह हो तो पुरुष कामदेवसे युक्त अर्थात् अतिकामी होवे ऐसेही क्रूरग्रहसे अल्पकामी होवै, नपुंसक ग्रहोंसे नपुंसक कहना और सूर्य होवै तो स्त्री मरे, यदि जीवित रहे तो रोगयुक्त रहे ॥ १५३ ॥ राहु सप्तममें पापग्रहोंसे दृष्ट होवे तो पत्नीका मेल नहीं होवे और होवेभी तो थोडेही समयमें मरजाती है। यदि शुभग्रहोंसे युक्त दृष्टभी होवे तो बहुत कालमें मरे ॥ १५४ ॥

रंध्रे मन्देऽस्ते कुजे मानवस्य पत्नीयुग्मं स्यात्तदानी तथैका ।
नष्टा वाच्या निश्चितं जातकज्ञैर्गुह्यस्थाने लाञ्छनं कृष्णवर्णम् ॥ १५५
तत्र स्थाने चन्द्रदृष्टिर्नरस्य भार्या नूनं चञ्चला स्यान्नितांतम् ।
यद्वा द्यूने जीववर्गे बुधेन युक्ते दृष्टे कामगेऽब्जे तथा स्यात् ॥ १५६ ॥
सौरे वर्गे द्यूनभे वा कुजस्य ताभ्यां दृष्टे दंपती चञ्चलौ स्तः ।
तत्र स्थेऽब्जे भार्गवे वा तदानी मर्त्यः स स्यादन्यदेशाभिगामी ॥ ५७ ॥

अष्टममें शनि, सप्तममें मंगल होवै तो मनुष्यकी दो स्त्री होवे । उनमेंसे एक नष्ट होगी यह जातकज्ञ निश्चय कहे तथा गुह्यस्थानमें काले रंगका लाञ्छनभी कहे ॥ १५५ ॥ ऐसे योगमें उस स्थानमें चंद्रमाकी दृष्टिभी होवे तो निश्चय उसकी स्त्री सर्वदा अति चंचला होगी । अथवा सप्तममें गुरुका राश्यादिवर्ग बुधसे युक्त वा दृष्ट और सप्तम चंद्रमाभी होवे तो भी वही फल होगा ॥ १५६ ॥ सप्तममें शनिका वर्ग अथवा मंगलका वर्ग हो और शनि मंगल सप्तम भावको देखे तो स्त्री पुरुष दोनों चंचल होंगे, तहां चंद्रमा वा शुक्र होवै तो मनुष्य परदेश जानेवाला होवै ॥ १५७ ॥

एकत्रस्थाश्चन्द्रमन्दावनेयाः पौश्चल्यत्वं ते नृनार्योः प्रकुर्युः ।
सौम्यांशे वा द्यूनपे सौम्यदृष्टे वेश्यातुल्या कामिनी स्यान्नरस्य ॥ ५८ ॥

लग्ने द्यूने द्वादशे पापखेटाः क्षीणे चन्द्रे धीस्थिते वा खलर्क्षे ।
पत्नीहीनो मानवः स्यान्नितांतं पुत्रैर्हीनश्चेति वै चिन्तनीयम् ॥ १५९ ॥
मूर्त्तौ षष्ठे वा व्यये भास्करेन्दू पुत्रो मर्त्त्यस्यैककैवाऽपि पत्नी ।
द्यूनस्थौ चेद्भार्गवारौ च यद्वा धीधर्मस्थौ स्यात्तु वैकल्यदोषः ॥ १६० ॥

चन्द्रमा शनि मगल इकट्ठे होवे तो वे स्त्री पुरुष दोनो व्यभिचार करे । सप्तमेश बुधके अशमे बुधसे दृष्ट होवै तो मनुष्यकी स्त्री वेश्याके तुल्य होवै॥ १५८॥ लग्न सप्तम और व्यय भावमे पापग्रह क्षीण चद्रमा पचम वा पापराशिमे होवै तो पुरुष सर्वदा स्त्रीहीन पुत्रहीन जानना ॥ १५९ ॥ लग्नमे छठेमे वा व्ययमें सूर्य चन्द्रमा होवै तो मनुष्यके एक स्त्री और एक पुत्र होगा । अथवा मंगल शुक्र सप्तममे वा पचम नवममे हो तो विकलता दोष स्त्रीपर रहे अर्थात् स्त्री सर्वदा विकल रहे ॥ १६० ॥

लग्नाच्चन्द्रात्पापखेटाः कलत्रे हन्युः पुंसां वीर्ययोगात्कलत्रम् । चेन्मन्देन्दू द्यूनसंस्थौ तदानी भार्या मर्त्त्यस्यैव पौनर्भवा स्यात् ॥ १६१ ॥ भूमीपुत्रे द्यूनभावोपयाते कान्ताहीनः संततं मानवः स्यात् । लब्ध्वा नूनं मीयते मन्दहष्टे सौम्यैः खेटैर्वीक्ष्यते नैव चात्र ॥ १६२ ॥ गण्डान्तर्क्षे द्यूनभावे च शुक्रे भास्वत्पुत्रे लग्नगे चेत्तदानीम् । वंध्याधीशः पूरुषः स्यान्नितांतं नो सौम्यर्क्षे नेक्षिते सद्ग्रहैश्चेत् ॥ १६३ ॥

लग्न और चद्रमासे पापग्रह सप्तम भावमे पुरुषके वीर्ययोगसे स्त्रीको मारते है । यदि शनि चन्द्रमा सप्तम हो तो पुरुषकी स्त्री पौनभर्वा (दूसरे जगह व्याहीं) होवै ॥ १६१ ॥ मगल सप्तम होवै तो वारवार स्त्रीहीन मनुष्य होता है । उसपर शनिकी दृष्टि भी हो तो स्त्री मिले फिर मर जावे, शुभग्रहकी दृष्टिभी होनो यह फल नही होगा ॥ १६२ ॥ सप्तम शुक्र गडात राशियों ४ । ८ । १२ का हो तथा यदि शनि लग्नमे हो तो उसकी स्त्री बांझ होवै, यदि शुभ ग्रहोका योग दृष्टि न हो तब यह फल है ॥ १६३ ॥

द्यूनस्थानाधीशनंदांशतुल्याः खेटानां वा वीक्षणादेव नार्यः ।
एकैका स्यादर्कभूपुत्रयोश्च नंदांशे वा सौम्यशन्योर्नरस्य ॥ १६४ ॥

मीनोपयातस्य विधोर्दशायां भवेन्नराणां सलिलोद्भवार्थः ।
शत्रुक्षयः स्याच्च मतिप्रवृद्धिः कलत्रपुत्रादिसुखादि नूनम् ॥ ७८ ॥
मीनसंस्थस्य वर्गोत्तमे शीतगोः पाककाले भवेत्संग्रहार्थागमः ।
सन्मतित्वं च पुत्रादिसौख्यं रिपोर्नाशनं कुञ्जराश्वादिकं मानवः ७९॥

मकरकी चद्रमाकी दशामे नित्य घरमे रहना कदापि न होवै, सुख, पुत्र, स्त्री धन मिलै, धन मिले। उन्मादरोग, वातरोगसे पीडित रहे ॥ ७५ ॥ कुंभके चद्रकी दशामे नाभिके ऊपर तथा नीचे पीडा, व्यसन, ऋणलाभ, शरीरमे कृशता, निंद्यस्त्रीके साथ रति, निरतर चचलता होती है ॥ ७६ ॥ कुभगत चद्रमा यदि वर्गोत्तममे होवै तो उसकी दशामे धनहीन, बलवानोसे विरोध, दात नेत्र कानोके रोगसे युक्त और अपने स्त्री, पुत्र, बंधु वर्गसे त्यक्त रहे ॥ ७७ ॥ मीनगत चद्रमाकी दशामे जलसे उत्पन्न धन मिले, शत्रुक्षय होवै, बुद्धि बढे, स्त्री पुत्र आदिके सुख निश्चय होवै ॥ ७८ ॥ मीनका चद्रमा वर्गोत्तमी होवै तो उसकी दशामे अर्थागम धनसग्रह होवै, सद्बुद्धि होवै, पुत्रादि सुख, शत्रुनाश, हाथी, घोडे आदिभी मनुष्यको मिलते है ॥ ७९ ॥

वर्गोत्तमे शीतरुचेरनुक्तस्थानेष्वभीष्टार्थयुतोऽतिविद्वान् ।
धीमान्नरः स्वीयकुले वरिष्ठो नीरादिसद्धर्मपरो भवेत्सः॥८०॥
व्ययोपयातस्य विधोर्दशायां पापार्जितद्रव्यसमुद्भवः स्यात् ।
नीचारिगस्थे च कृशे पुरोक्तं लब्धं धनं नाशमुपैति शीघ्रम् ॥ ८१ ॥ पाकेऽष्टमस्थस्य च नीचगस्य शीतद्युतेः संलभतेऽतिरोगम् । ज्ञातिच्युतिं पापयुतो मृतिं वा षष्ठोपगस्य व्यसनं मनुष्यः ॥ ८२ ॥ क्षीणाष्टमस्थस्य विधोर्दशायां नानामयाद्यैः परिपीडनं च । यद्वापि कांताकृतदोषहेतोर्नूनं नरेन्द्रं लभते मनुष्यः ॥ ८३ ॥ पाकेऽष्टमस्थस्य च मूढगस्य विधोर्नरः संलभतेऽतिदुःखम् । नानामयाद्यैः परिपीडनं च राज्यच्युतिं नीरभवं भयं च ॥ ८४ ॥ षष्ठोपगस्य च दशा व्यसनाभिकर्त्री क्षीणे स्वबंधुजननाशकरी नराणाम् । पूर्णे तथोदयगते खलु राज्यकर्त्री स्त्रीकर्मकृद्दशमगेऽपि च सिन्धुजाते ॥ ८५ ॥

वर्गोत्तमी चन्द्रमा अनुक्तस्थानमे भी होवै तो उसकी दशामे मनुष्य मनोवांछित फलवाला विद्वान् बुद्धिमान् अपने कुलमे श्रेष्ठ और जलाशयादि उत्तमधर्म करनेमे तत्पर होता है ॥ ८० ॥ व्ययगत चंद्रदशामे पापसे कमाया धन आवै, नीचमे शत्रुराशिमे होय वा क्षीण होवै तो पूर्वोक्त धन शीघ्र नाश होवै ॥ ८१ ॥ नीचका चन्द्रमा अष्टममे हो तो उसकी दशामे अतिरोग जातिसे उतग्ना होय पापयुक्तभी होवे तो मृत्युपर्यंत कष्ट और ऐसा चन्द्रमा छठा होवे तो व्यसनयुक्त होता है ॥ ८२ ॥ अष्टमगत क्षीणचद्रमाकी दशामे अनेक रोगोसे पीडन यद्वा स्त्रीके दोषके कारण राजसभामे निश्चय मनुष्य खडा होवै ॥ ८३ ॥ अस्तगत अष्टमचन्द्रमाकी दशामे अतिदुःख, अनेक रोगादिसे पीडन, राज्यभ्रष्टता, जलसबन्धी भय पावे ॥ ८४ ॥ छठे चन्द्रमाकी दशा व्यसन करती है । क्षीणभी हो तो मनुष्योंको अपने बंधुजनका नाश करती है । पूर्ण होवे तथा लग्नगत होवे तो निश्चय राज्य करती है, यदि दशम हो तो स्त्रीके सदृश कार्य करनेवाला होता है ॥ ८५ ॥

अथ भौमदशाफलम् ।

वक्रानुवक्रं तरणेश्च पूर्वापरं च षट्कं द्वितयं समीक्ष्य ।
ताराग्रहाणामपि नीचतुंगं सम्यग्विचारेण फलं प्रवाच्यम् ॥ ८६ ॥
स्वोच्चस्वराश्यादिनवांशसंस्था विलोमगाश्चास्तगता यदि स्युः ।
ताराग्रहाः स्वीयफलं विमिश्रं यच्छंति नूनं निजपाककाले ॥ ८७ ॥
पाकप्रवेशे क्षितिनंदनस्य तत्साहसैः स्याद्विविधोद्यमैश्च ।
भूपालशस्त्रानलतः कलेर्वा चतुष्पदादेर्विविधा धनाप्तिः ॥ ८८ ॥
भूपालचोरानलशत्रुभीतिः पित्तज्वरासृक्परिपीडनं च ।
नीतिच्युतिर्द्रव्यहतिर्नराणां भवेत्कलिः स्त्रीसुतबंधुवर्गैः ॥ ८९ ॥

भौमादिग्रहोका विचार सूर्यसे आगे वक्र पीछे मार्ग, यद्वा पीछे वक्र आगे मार्ग अर्थात् अस्तके समान बालवृद्ध और सूर्यके जितने अंश हो वहांसे सूर्यसे सप्तमके उतनेही अंश पर्यंत पूर्वषट्क और सूर्यांशतुल्य सूर्यके सप्तमसे लेकर सूर्यांश पर्यंत परषट्क तथा नीच उच्च ऐसे विचारसे फल कहना ॥ ८६ ॥

अपने उच्च, स्वराशि, स्वनवांशकी वक्रगति अस्तभी भौमादि हो तो अपनी दशामे मिश्रित फल देते है ॥ ८७ ॥ मंगलकी दशामे अच्छे साहससे, अनेक उद्यमोसे, राजा, शस्त्र, अग्निसे वा कलहसे, चतुष्पदसे धन मिलता है ॥ ८८ ॥ हीनस्थानादिमे होनेसे राजा, चोर, अग्नि, शत्रुसे भय, पित्त-ज्वर, रुधिररोगसे पीडा, नीतिसे गिरना, धनहानि, स्त्री, पुत्र, बंधुवर्गमे कलह होते है, ये भौमदशाके सामान्य फल हैं ॥ ८९ ॥

लोहितांगस्य मूलत्रिकोणे नृणां पाककाले विशेषाद्रणे सद्यशः ।
पुत्रजायादिसौख्यं महोग्रा मतिः साहसेनार्थलब्धिर्नितांतं भवेत् ९०॥
मेषस्थितस्यावनिनंदनस्य पाके महोत्साहधनानि पुंसाम् ।
ख्यातिर्मतिः साहसमग्निबाधा नानाविधारातिसमुद्गमः स्यात् ॥९१॥
वृषस्थितस्यावनिजस्य पाके स्थित्या विहीनः शुचिरोगततः ।
अनल्पजल्पः परवित्तयुक्तः परोपकारी गुरुदेवभक्तः ॥ ९२ ॥
द्वन्द्वस्थितस्यावनिजस्य पाके विदेशवासी कुटिलो व्ययार्त्तः ।
पित्तानिलार्त्तः स्वजनैर्विरोधी कलाविधिज्ञो बधिरो नरः स्यात्।९३॥
भौमस्य कर्कोपगतस्य पाके धनंजयोद्यानभवार्थयुक्तः ।
क्लेशान्वितः स्त्रीसुतबंधुवर्गैर्दूरे नरः स्याद्विकलो विकृष्टः ॥ ९४ ॥
वृथाटनत्वं विगताधिकत्वं नीचत्वमुच्चैर्मनसो विषादः ।
फलोन्मुखं कार्यमतीव दूरे भौमस्य नीचांशगतस्य पाके ॥ ९५ ॥
वक्रस्य नीचांशपरिच्युतस्य पाके नरः सर्वगुणोपपन्नः ।
ख्यातो गजाश्वादियुतो बलाढ्यो गुह्यामयार्त्तो नृपवर्गशत्रुः ॥९६॥
भौमस्य कंठीरवसंस्थितस्य पाके नराणां बहुनायकत्वम् ।
स्त्रीपुत्रवित्तादिवियोगता च बाधा भवेच्छस्त्रहुताशजाता ॥ ९७ ॥

मूलत्रिकोणगत भौमकी दशामे विशेषतः रणमे यश मिले, स्त्री पुत्र सुख, उग्र बुद्धि और साहससे बराबर धनलाभ होवे ॥ ९० ॥ मेषगत भौमदशामे पुरुषोको बडे उत्साह, धन, ख्याति, साहस, बुद्धि, अग्निपीडा, अनेक प्रका-

रके शत्रुका उदय होवै ॥ ९१ ॥ वृषगत भौमदशामे स्थितिमे रहितना, रोगसे सनतना, वहुत बोलना, पराया धन लाभ, परोपकारिता गुरुदेवभक्ति होवै ॥९२॥ मिथुनगत भौमदशामे विदेशवासी, कुटिल, खर्चसे पीडित, पित्त-वायुसे पीडित, अपने मनुष्योंमे विरोधी, कलाविधि जाननेवाला, कानका बहरा मनुष्य होवै ॥ ९३ ॥ कर्कगत भौमदशामे अग्नि वा बाग बगीचा संबंधी धनमे युक्त होवे । क्लेशयुक्त तथा स्त्री, पुत्र, बन्धुवर्गसे दूर रहे, कला-रहित होवे ॥ ९४ ॥ नीचांशगत भौमदशामे व्यर्थ फिरना होवे, श्रेष्ठता न रहे, बडी नीचता, मनका विषाद रहे, फल देनेको तयार हुआ कार्यभी दूर चला जावै ॥ ९५ ॥ परमनीचांशमे उत्तर भौमदशामे मनुष्य समस्तगुणोंसे युक्त, विख्यात, हाथी घोडाओंमे युक्त, बलवान् रहे, तथा गुह्यस्थानके रोगमे पीडित और राजवर्गका शत्रु होवे ॥ ९६ ॥ सिंहगत भौमदशामे बहुत मनुष्योंकी अफसरी मिले तथा स्त्री पुत्र, धनसे वियोग शस्त्राग्निपीडाभी होवै ॥ ९७ ॥

कन्याश्रितक्ष्मातनयस्य पाके यज्ञक्रियायां निपुणो मनुष्यः ।
भवेत्सदाचारपरो विनीतः स्त्रीपुत्रधात्रीधनधान्यसौख्यः ॥ ९८ ॥
भौमस्य जूकोपगतस्य पाके स्त्रीवित्तहीनो विकलांगयष्टिः ।
हृतोत्सवो ना कलहप्रसंगैर्दुष्टो भवेद्वै पशुना वियुक्तः ॥ ९९ ॥
अंगारकस्यालिगतस्य पाके कृषिक्रियाधान्यधनैः समृद्धः ।
द्वेषी बहूनामतिजल्पकः स्याद्विषाग्निशस्त्रादिभयाभितप्तः ॥ १०० ॥
चापस्थितस्य क्षितिजस्य पाके भवेन्नराणां द्विजदेवभक्तिः ।
मनोरथाप्तिर्नृपतेर्नितांतमुत्साहभंगः कलहप्रसंगात् ॥ १०१ ॥
आकोकेरस्थस्य पाके कुजस्य राज्यप्राप्तिः स्वीयवंशानुमानात् ।
युद्धे वादे स्याज्जयो वाहनानि भूमीपालात्स्वर्णरत्नादिलाभः ॥ १०२ ॥
उच्चातिक्रांतस्य भूमीसुतस्य पाके यत्नात्कार्यसिद्धिर्धनाप्तिः ॥
शस्त्रात्पुंसां चापदादेश्च भीतिस्तोषाल्पत्वं स्यान्महत्साहसं च १०३

कन्यागत भौमदशामे मनुष्य यज्ञक्रियामे निपुण, सदाचारमे तत्पर, नम्र, स्त्री, पुत्र, भूमि, धन अन्नके सुखयुक्त होता है ॥ ९८ ॥ तुलागत भौमदशामे

स्त्रीसे धनसे हीन, विकल शरीर, उत्सवरहित, कलहप्रसगसे दूषित और पशुसे रहित होवै ॥ ९९ ॥ वृश्चिकगत भौमदशामे कृषिकर्म, अन्न धनसे सम्पन्न, बहुतोंका द्वेषी, बहुत बोलनेवाला, विष, अग्नि, शस्त्र आदिकी भयसे संतप्त होवै ॥ १०० ॥ धनगत भौमदशामे मनुष्योंको देव ब्राह्मणभक्ति, राजासे मनोरथ प्राप्ति होती है, कलहप्रसगसे उत्साहभग होता है ॥ १०१ ॥ मकरगत भौमदशामे अपने कुलानुमानसे राज्यप्राप्ति होती है तथा युद्धमे विवादमे जय, राजासे वाहन, सुवर्ण रत्नादि मिले ॥ १०२ ॥ उच्चसे उतरे भौमकी दशामे यत्नसे कार्यसिद्धि, धनप्राप्ति, शस्त्रकी और आपत्ति आदिकी भय, सन्तोष अल्प और बडा साहसभी होता है ॥ १०३ ॥

कुजस्य कुंभोपगतस्य पाके दुर्मार्गताऽऽचारविहीनता च ।
दारिद्र्यदुःखामयजातपीडा व्ययो बहुस्त्रीतनयादिचिंता ॥ १०४ ॥
वक्रस्य मीनोपगतस्य पाके ऋणोपलब्धिस्तनयादिचिंता ।
विचर्चिपामाव्रणजातपीडा व्ययामयत्वं हि विदेशवासः ॥ १०५ ॥
भौमस्य वर्गोत्तमगस्य पाके संग्रामसंप्राप्तजयाधिकत्वम् ।
बलाधिकत्वं च गुणाधिकत्वं विख्यातकीर्तिं लभते मनुष्यः ॥ १०६ ॥
धात्रीसुतस्यास्तमयोपगस्य पाके किलोपद्रवकैरनेकैः ।
मतिप्रणाशोऽखिलकार्यहानिर्भवेन्नराणां विकलत्वमङ्गे ॥ १०७ ॥
भूमीसुतस्याष्टमभावगस्य दशा विवादं विविधं विरोधम् ।
करोति विघ्नं निजबंधुहेतोः सम्मानहानिं च रुजोदयं च ॥ १०८ ॥
कुजस्योच्चमूलत्रिकोणर्क्षगस्य दशाऽऽयस्थितस्यापि पाके नराणाम् ।
भवेद्राज्यलब्धिश्च युद्धेऽरिवर्गाज्जयो वित्तरत्नादिसद्वाहनानाम् ॥ १०९ ॥

कुम्भगत भौमदशामे दुष्टमार्ग चलना, आचारहीनता, दरिद्रता, दुःख, रोगसे पीडा, बहुत खर्च, स्त्रीपुत्रादिचिंता होती है ॥ १०४ ॥ मीनगत भौमदशामे ऋण मिले, पुत्रादिचिंता, विसूचिका रोग, अपची, खुजली, फोडाओंसे पीडा, खर्च, रोग और विदेशवास होता है ॥ १०५ ॥ वर्गोत्तमगत भौमदशामे सग्राममे मिली विजय बढे, गुण बढे, मनुष्य विख्यातकीर्तिकोभी

पाता है ॥ १०६ ॥ अस्तगत भौमदशामे निश्चय अनेक उपद्रवोंसे बुद्धि मारी जावै, सपूर्णकार्य्योंकी हानि होवे तथा मनुष्योके अगमे विकलता भी होवे ॥ १०७ ॥ अष्टमगत भौमदशा कलह, अनेक प्रकार विरोध, अपने बन्धुजनके हेतु विघ्न, सम्मानकी हानि और रोगका उदयभी करती है ॥ १०८ ॥ अपने उच्च, मूलत्रिकोण, स्वराशिगत एकादशस्थ भौमकी दशामे राज्यप्राप्ति, युद्धमे शत्रुमे विजय, धनरत्न, उत्तमवाहनोकी प्राप्ति होती है ॥ १०९ ॥

अथ बुधदशाफलम् ।

**विद्याविवेकविभुता कृपिकर्मयुक्तोधर्मक्रियाविविधयज्ञविधान-चित्तः । वित्तान्वितश्च विविधोद्यमवृत्तियोगाच्छिल्पादिकर्म-कुशलो विविधोत्सवाढ्यः ॥ ११० ॥ संगीतनर्त्तनकुतूहल-हास्यहर्षैः कालक्रमत्वमतिसद्विनयोपलब्धि । आचार्य-सज्जनमतत्वमथो नवान्नसद्भाण्डभूपणगृहादिविनिर्मितत्वम् ॥ १११ ॥ पुंसां कलत्रतनयादिसुखोपलब्धिः पाके बुधस्य कफपित्तसमीरपीडा । हानिर्धनस्य सुधियाऽत्र बलाबलत्वं पूर्वं विचिन्त्य सदसत्फलमेव वाच्यम् ॥ ११२ ॥**

उत्तमबली बुधकी दशामे विद्या ज्ञान, सामर्थ्यता, कृपिकर्ममे युक्त होता है । धर्मकृत्य और अनेक यज्ञ करनेमे मन रहता है । अनेक प्रकार उद्यम वृत्तियोगसे धनयुक्त होता है । शिल्पादि कामोमे चतुर और अनेक उत्सवोंसे युक्त होता है ॥ ११० ॥ मध्यबली बुधकी दशामे गीत, नृत्य, खेल, हँसी, खुशी आदिसे समय बीतताहै । उत्तम विनय मिलता है, आचार्यता, सज्जनोमे समत होता है, उत्तम ( भांड ) बासन, भूपण, घर आदिका बनाना होता है ॥ १११ ॥ हीनबली बुधकी दशामे मनुष्योंको स्त्री पुत्रादि सुख मिलते है तथा कफ, वात, पित्तकी पीडा, धनकी हानि होती है, बुद्धिमान्को बलाबल देखके शुभाशुभ फल कहना चाहिये ॥ ११२ ॥

**मेषस्थितस्येन्दुसुतस्य पाके धीमाञ्छुभांगः परभाग्यनिष्ठः । द्यूतानृतस्तेयशठत्वयुक्तो भवेत्स सौजन्यधनेन हीनः ॥ ११३ ॥**

वृषस्थितस्येन्दुसुतस्य पाके मातुस्त्वनिष्टश्च धनी यशस्वी।
गुणान्वितः स्यान्मनुजः कलत्रात्मजादिचिंता गरलार्तियुक्तः॥११४
नृयुग्मसंस्थस्य बुधस्य पाके त्वनेककर्माभिरतोऽतिजल्पः।
स्त्रीपुत्रमित्रादिसुखोपपन्नो नरो भवेन्मातृसुखेन हीनः॥ ११५॥
कुलीरसंस्थस्य बुधस्य पाके मित्रैश्च सत्काव्यकलार्जितार्थः।
विदेशवासी व्यवसाययुक्तः सौख्याल्पको बन्धुजनैर्विरोधी॥ ११६॥
हरिस्थितस्येन्दुसुतस्य पाके पुंसां भवेज्ज्ञानयशोऽर्थनाशः।
स्वबन्धुमित्रात्मजकामिनीभिः सौख्याल्पता सन्मतिहीनता च११७

मेषगत बुधकी दशामे मनुष्य बुद्धिमान् सुंदर अगवाला तथा पराये भाग्यके भरोसेपर रहनेवाला, जुआ, झूठ, चोरी, ठगीसे युक्त और सज्जनता एव धनसे हीन होवै ॥ ११३ ॥ वृषगत बुधकी दशामे माताकी बुराई करे, धनवान्, यशस्वी, गुणयुक्त, स्त्री पुत्रादि चिंता, विषकी पीडासे युक्त होवै ॥ ११४ ॥ मिथुनगत बुधकी दशामे अनेक कामोमे तत्पर रहे, बहुत बोले, स्त्री पुत्र मित्रादियोका सुख मिले तथा मनुष्य मातृसुखसे हीन होवै ॥११५॥ कर्कटगत बुधकी दशामे मित्रोसे तथा उत्तम काव्यकलासे धन कमावै, विदेशमे रहे, व्यापारी होवै, सुख अल्प मिले, बधुजनोसे विरोधी होवै॥११६॥ सिहगत बुधकी दशामे पुरुषोके ज्ञान, यश, धनका नाश, अपने बधु, मित्र, पुत्र स्त्रीसे सुख अल्प और बुद्धि हीनता होवै ॥ ११७ ॥

सुलिपिलेखनकाव्यकलांतरं प्रकुरुते बहुवैभवयुङ् नरम्।
विनयनीतिपरं जितवैरिणं बुधदशा निजतुंगगतस्य च
॥ ११८॥ मूलत्रिकोणस्य च सौम्यपाके विदेशयानानुरतो
विधिज्ञः। पराक्रमेणाप्तधनो नरः स्यात्क्षमान्वितः ख्यातगुणैः
प्रपूर्णः॥ ११९॥ उच्चत्रिकोणांशपरिच्युतस्य ज्ञपाककाले
पशुसौख्यहानिः। कलिप्रसंगो विकलत्वमंगे स्वबंधुवैरं च
भवेन्नराणाम् ॥१२०॥ जूकोपयातस्य बुधस्य पाके क्षणेक्षणे
शांतमतिः प्रचंडः। शिल्पादिकर्मण्यतिनैपुणः स्याद्वाणि-

पाता है ॥१०६॥ अस्तगत भौमदशामे निश्चय अनेक उपद्रवोंमे बुद्धि मारी जावै, सपूर्णकार्य्योंकी हानि होवे तथा मनुष्योंके अगमे विकलता भी होवै ॥१०७॥ अष्टमगत भौमदशा कलह, अनेक प्रकार विरोध, अपने बंधुजनके हेतु विघ्न, सम्मानकी हानि और रोगका उदयभी करती है ॥ १०८ ॥ अपने उच्च, मूलत्रिकोण, स्वराशिगत एकादशस्थ भौमकी दशामे राज्यप्राप्ति, युद्धमे शत्रुसे विजय, धनरत्न, उत्तमवाहनोकी प्राप्ति होती है ॥ १०९ ॥

अथ बुधदशाफलम् ।

**विद्याविवेकविभुता कृपिकर्मयुक्तोधर्मक्रियाविविधयज्ञविधान-चित्तः । वित्तान्वितश्च विविधोद्यमवृत्तियोगाच्छिल्पादिकर्म-कुशलो विविधोत्सवाढ्यः ॥ ११० ॥ संगीतनर्त्तनकुतूहल-हास्यहर्षैः कालक्रमत्वमतिसद्विनयोपलब्धिः । आचार्य-सज्जनमतत्वमथो नवान्नसद्भाण्डभूषणगृहादिविनिर्मितत्वम् ॥ १११ ॥ पुंसां कलत्रतनयादिसुखोपलब्धिः पाके बुधस्य कफपित्तसमीरपीडा । हानिर्धनस्य सुधियाऽत्र बलाबलत्वं पूर्वं विचिन्त्य सदसत्फलमेव वाच्यम् ॥ ११२ ॥**

उत्तमबली बुधकी दशामे विद्या ज्ञान, सामर्थ्यता, कृपिकर्मसे युक्त होता है । धर्मकृत्य और अनेक यज्ञ करनेमे मन रहता है । अनेक प्रकार उद्यम वृत्तियोगसे धनयुक्त होता है । शिल्पादि कामोमे चतुर और अनेक उत्सवोसे युक्त होता है ॥ ११० ॥ मध्यबली बुधकी दशामे गीत, नृत्य, खेल, हँसी, खुशी आदिसे समय बीतताहै । उत्तम विनय मिलता है, आचार्यता, सज्जनोमे समत होता है, उत्तम ( भाड ) बासन, भूषण, घर आदिका बनाना होता है ॥१११॥ हीनबली बुधकी दशामे मनुष्योंको स्त्री पुत्रादि सुख मिलते है तथा कफ, वात, पित्तकी पीडा, धनकी हानि होती है, बुद्धिमान्को बलाबल देखके शुभाशुभ फल कहना चाहिये ॥ ११२ ॥

**मेषास्थितस्येन्दुसुतस्य पाके धीमाञ्छुभांगः परभाग्यनिष्ठः । द्यूतानृतस्तेयशठत्वयुक्तो भवेत्स सौजन्यधनेन हीनः ॥ ११३ ॥**

वृषस्थितस्येन्दुसुतस्य पाके मातुस्त्वनिष्टश्च धनी यशस्वी।
गुणान्वितः स्यान्मनुजः कलत्रात्मजादिचिंता गरलार्तियुक्तः॥११४
नृयुग्मसंस्थस्य बुधस्य पाके त्वनेककर्माभिरतोऽतिजल्पः।
स्त्रीपुत्रमित्रादिसुखोपपन्नो नरो भवेन्मातृसुखेन हीनः॥ ११५॥
कुलीरसंस्थस्य बुधस्य पाके मित्रैश्च सत्काव्यकलार्जितार्थः।
विदेशवासी व्यवसाययुक्तः सौख्याल्पको बन्धुजनैर्विरोधी॥ ११६॥
हरिस्थितस्येन्दुसुतस्य पाके पुंसां भवेज्ज्ञानयशोर्थनाशः।
स्वबन्धुमित्रात्मजकामिनीभिः सौख्यालपता सन्मतिहीनता च११७

मेषगत बुधकी दशामे मनुष्य बुद्धिमान् सुंदर अगवाला तथा पराये भाग्यके भरोसेपर रहनेवाला, जुआ, झूठ, चोरी, ठगीसे युक्त और सज्जनता एव धनसे हीन होवै॥ ११३॥ वृषगत बुधकी दशामे माताकी बुराई करे, धनवान्, यशस्वी, गुणयुक्त, स्त्री पुत्रादि चिंता, विषकी पीडासे युक्त होवै॥ ११४॥ मिथुनगत बुधकी दशामे अनेक कामोमे तत्पर रहे, बहुत बोले, स्त्री पुत्र मित्रादियोका सुख मिले तथा मनुष्य मातृसुखसे हीन होवै॥११५॥ कर्कटगत बुधकी दशामे मित्रोसे तथा उत्तम काव्यकलासे धन कमावै, विदेशमे रहे, व्यापारी होवै, सुख अल्प मिले, बधुजनोसे विरोधी होवै॥११६॥ सिंहगत बुधकी दशामे पुरुषोके ज्ञान, यश, धनका नाश, अपने बंधु, मित्र, पुत्र स्त्रीसे सुख अल्प और बुद्धि हीनता होवै॥ ११७॥

सुलिपिलेखनकाव्यकलांतरं प्रकुरुते बहुवैभवयुङ् नरम्।
विनयनीतिपरं जितवैरिणं बुधदशा निजतुंगगतस्य च
॥ ११८॥ मूलत्रिकोणस्य च सौम्यपाके विदेशयानानुरतो
विधिज्ञः। पराक्रमेणाप्तधनो नरः स्यात्क्षमान्वितः ख्यातगुणैः
प्रपूर्णः॥ ११९॥ उच्चत्रिकोणांशपरिच्युतस्य ज्ञपाककाले
पशुसौख्यहानिः। कलिप्रसंगो विकलत्वमंगे स्वबंधुवैरं च
भवेन्नराणाम्॥१२०॥ जूकोपयातस्य बुधस्य पाके क्षणेक्षणे
शांतमतिः प्रचंडः। शिल्पादिकर्मण्यतिनैपुणः स्याद्दाणि-

ज्यतोऽर्थः पशुना वियुक्तः ॥१२१॥ कीटस्थितस्येन्दुसुतस्य पाके प्रेष्यांगनासक्तिपरोऽल्पतुष्टः । नरः सदाचारविवर्जितः स्याद्व्ययेन युक्तः स्वजनैर्वियुक्तः ॥ १२२ ॥ चापोपयातस्य बुधस्य पाके मंत्री च नामद्वययुङ्मनुष्यः । कृषिक्रियाया· पशुभिश्च वित्तयुक्तो नितान्तं बहुनायकः स्यात् ॥ १२३ ॥ बुधस्य नक्रोपगतस्य पाके ऋणोपलब्धिर्मतिवैपरीत्यम् । नीचैश्च सख्यं कपटत्वमुच्चैर्बह्वाटनं स्यान्मनुजस्य नूनम्॥१२४॥

उच्चगत बुधकी दशा मनुष्योंको उत्तम लिपी लेखन, काव्यकलामें युक्त, बहुत ऐश्वर्ययुक्त, नम्रता, नीति तत्परता युक्त और शत्रु जीतनेवाला करती है ॥ ११८ ॥ मूलत्रिकोणगत बुधदशामें विदेशगमनमे तत्पर, विधि जाननेवाला, पराक्रममें धनवान्, क्षमायुक्त, ध्यान गुणोंमे पूर्ण करती है॥ ११९॥ उच्चांशक, त्रिकोणांशकसे उतरे बुधकी दशामें पशु सुखकी हानि, कलहका प्रसंग, अंगमे विकलता, अपने बधुजनोंसे मनुष्योंका वैर होता है॥१२०॥ तुलागत बुधकी दशामे क्षणमे शान्त स्वभाव, क्षणमे प्रचंड बुद्धि होवे शिल्प आदि कर्ममे अतिनिपुण होवे, व्यापारमे धन मिले, पशुमे वियुक्त रहे ॥१२१॥ वृश्चिक गत बुध दशामें दूती, दासी आदिमे आसक्त रहे, थोडेमें प्रसन्न होजावे, सदाचारसे रहित, व्यययुक्त रहे और मनुष्य अपने मनुष्योंमे भी जुदा रहे ॥१२२॥ धनगत बुधदशामे मनुष्य मत्री होवे, एक नाम पहिला दूसरा नाम उपाधिका पावै, कृपिकर्म तथा पशुओंमे युक्त, सर्वदा बहुतोंका अधिपति होवे ॥ १२३ ॥ मकरगतबुधकी दशामें कर्ज मिले, बुद्धि विपरीत होजावे, नीचजनोमे मित्रता होवे, बडी कपटता आवे और मनुष्यको निश्चय बहुत फिरना पडे ॥ १२४ ॥

चान्द्रेर्दशायां कलशस्थितस्य तेजोविहीनो व्यसनानुरक्तः । स्वबंधुपीडापरिपीडितात्मा विदेशयानानुरतोऽतिनिःस्वः ॥१२५॥ बुधस्य नीचोपगतस्य पाके विदेशगः सत्त्वगुणैर्विहीनः । कृशोऽतिनिःस्वोऽन्यगृहाश्रितः स्यान्नरो भवेद्वंधुजनै-

र्विहीनः॥१२६॥ नीचान्निवृत्तस्य बुधस्य पाके विषाग्निशस्त्रैश्च चतुष्पदाद्यैः। प्रपीडितः स्यान्मनुजो नितान्तं नित्यं कुकर्माभिरतोऽल्पतुष्टः॥ १२७॥ अस्तोपयातस्य बुधस्य पाके हित्वा निजर्क्षं मनुजोऽतिदुःखी। कासामयाद्यैः परिपीडितः स्यात्क्षमान्वितो वै द्रविणेन हीनः॥१२८॥ वर्गोत्तमस्थे हिमरश्मिपुत्रे शुभाशुभैर्युक्तनिरीक्षिते च। दशाफलं मध्यममेव तत्र सर्वत्र सौम्यस्य दशा विमिश्रा॥१२९॥स्वर्क्षादिसंस्थस्य च लग्नबंधुकर्मोपयातस्य दशा बुधस्य। ज्ञानं धनं स्वीयकलाधिकत्वं करोति सौख्यं ननु मानवानाम्॥ १३०॥

कुम्भगत बुधदशामे तेजरहित, व्यसनोमे तत्पर, बहुपीडासे पीडित शरीर, विदेश जानेमे तत्पर और अतिनिर्धन रहै॥ १२५॥ नीच १२ गत बुधदशामे विदेशवासी, सत्त्व और गुणोसे हीन, कृश शरीर, अतिनिर्धन, पराये घरमे निवासी तथा मनुष्य बधुजनोसे हीन रहै॥ १२६॥ परम नीचांशकर्म निवृत्त हुये बुधकी दशामे विष अग्नि शस्त्र तथा चौपायो आदिसे पीडित, नित्य कुकर्मोमे तत्पर और थोडेमे सतुष्ट रहै॥ १२७॥ अपनी राशिसे अन्य राशियोमे अस्तंगत बुधकी दशामे मनुष्य अतिदुःखी खासी आदि रोगोमे पीडित श्रमयुक्त और धनहीन रहै॥ १२८॥ वर्गोत्तमगत बुध शुभपापोसे युत दृष्ट होवै तो उसकी दशाका फल मध्यम होता है, विशेषतः बुधकी दशाही मिश्रित फल देती है॥ १२९॥ स्वराशि आदिका बुध यदि १। ४। १० भावोमे होवै तो उसकी दशा ज्ञान धन अपनी कलाकी अधिकता और मनुष्योको निश्चय सुख करती है॥ १३०॥

अथ गुरुदशाफलम्।

वृत्रारिपूज्यस्य दशाप्रवेशे सद्धर्मशास्त्रानुरतो विनीतः।
भूपप्रसादाप्तमनोरथातः सत्कर्मयज्ञाभिरुचिः सुशीलः॥ १३१॥
देवद्विजाचार्यविभुतासमेतो मेधान्वितोऽत्यंतधनैः प्रपूर्णः।
सुवर्णरत्नाम्बरवाहनाद्यैः कलत्रपुत्रादिसुखैः समेतः॥१३२॥

सत्संगयुक् स्वान्वयकुलवरिष्ठोऽत्यर्थं नरः सत्त्वगुणान्वितः स्यात् । गुल्मोदरप्लीहगलामयाद्यैः प्रपीडितश्चिन्त्यमिदं विरुद्धात् ॥ १३३ ॥

गुरुकी दशामे सद्धर्म सच्छास्त्रोमे तत्पर, नम्र, राजप्रमादसे मनोरथ प्राप्त, सुकर्म, यज्ञ आदिमे रुचि, सुदर शील होवै ॥ १३१ ॥ देव ब्राह्मण पूजन, प्रभुतासे युक्त, बुद्धियुक्त, अत्यत धनोसे पूर्ण रहे । सुवर्ण, रत्न, वस्त्र, वाहन आदि, स्त्री पुत्रादि सुखोसे युक्त रहै ॥ १३२॥ सत्सगमे युक्त, अपने कुलमे श्रेष्ठ तथा मनुष्य अत्यन्त सत्त्व गुणसे युक्त होवे । इनने फल शुभ भाव राश्यादियोके है, विरुद्ध स्थानादिमे होवे तो गुल्मरोग, प्लीहा, कठरोग आदियोसे पीडित रहै ॥ १३३ ॥

मेषोपयातस्य सुरार्चितस्य पाके नराणां बहुनायकत्वम् । ज्ञानोदयं स्यान्नृपतेर्धनं च स्त्रीपुत्रमित्रादिसुखोपलब्धिः ॥ १३४ ॥ पाके गुरोस्तावुरिसंस्थितस्य दुःखैश्च रोगैः परिपीडितः स्यात् । विदेशवासी द्रविणेन हीनो हृतोत्सवः साहसयुङ्मनुष्यः॥ १३५॥ जीवस्य युग्मोपगतस्य पाके मातुस्त्वनिष्टो निजगोत्रवर्गे। भवेद्विरोधी वनिताविवादात्संतप्तचित्तो मनुजोऽल्पवित्तः ॥ १३६ ॥ उच्चोपयातस्य गुरोर्दशायां राज्योपलब्धिर्बहुवैभवं च । विशिष्टनाम्ना प्रथितत्वमुच्चैर्भवन्नराणां नृपतेश्च सख्यम् ॥ १३७ ॥

मेषगत गुरुकी दशामे मनुष्योको बहुत मनुष्योमे श्रेष्ठता ( अफसरी ) मिलती है। ज्ञानका उदय, राजासे धन, स्त्री, पुत्र, मित्र आदियोका सुख मिलता है ॥ १३४ ॥ वृषगत गुरुकी दशामे दुःख तथा रोगोसे भी पीडित, विदेशमे निवासी, धनसे हीन, मगल उत्सवोसे हीन और साहसमे युक्त होता है ॥ १३५ ॥ मिथुनगत गुरुकी दशामे माताकी बुराई करनेवाला, अपने जात भाइयोमे विरोधी, स्त्रीविवादसे सतप्त चित्त और अल्प धन होवै ॥ १३६॥ उच्च ४ गत गुरुदशामे राज्य लाभ, बहुत ऐश्वर्य, विशेष नामकरके प्रसिद्धि, राजासे मैत्री होती है ॥ १३७ ॥

उच्चच्युतस्यामरपूजितस्य पाके नरः स्य[illegible]तृदुःखी । प्रागर्जितद्रव्यचयक्षयेन ततो नितान्तं व्यसनाभिभूतः ॥ १३८ ॥ कण्ठीरवस्थस्य गुरोर्दशायां भूपाप्तमानो मनुजो वदान्यः । कलत्रपुत्रानुजजातहर्षोऽत्यर्थं मनुष्यो द्रविणेन युक्तः ॥ १३९ ॥ पाथोनसंस्थस्य गुरोर्दशायां भूपालदाराश्रयतो धनाप्तिः । शूद्रादिनीचैः कलहप्रसंगो नूनं भवेत्संभ्रमणं च पुंसाम् ॥ १४० ॥ तुलाश्रितस्यामरपूज्यपाके दुष्टव्रणार्त्तः सुतदारशत्रुः । मन्दोत्सवः स्यात्प्रमितान्नभोक्ता विवेकहीनो मनुजोऽरिहंता ॥१४१॥ कौर्प्यस्थदंभोलिभृदीज्यपाके प्राज्ञः समर्थो धिषणावरेण्यः । नरः सुतोत्साहयुतोऽनृणी स्याद्रोगाभिभूतो नियमेन हीनः ॥ १४२ ॥ प्राग्दिग्लवेषु धनुषः स्थितगीष्पतेश्च मूलत्रिकोणभवने च भवेद्दशायाम् । मंत्री पुमान् मतिवरस्त्वथ मांडलीकः पित्रादिकस्वयुवतीवचनानुरक्तः ॥ १४३ ॥ दिगंशकेभ्यः परतश्च चापस्थितस्य वाचस्पतिपाकवेशे । यज्ञादिसिद्धिं कृपिगोधनानि सुखं प्रवासाल्लभते मनुष्यः ॥ १४४ ॥

उच्चसे उतरे गुरुकी दशामे माता पिताको दुःख, पहिले कमाये धनके क्षयसे मनुष्य नित्य सतप्त रहे, व्यसनोसे दबा रहे ॥ १३८ ॥ सिंहगत गुरुदशामे मनुष्यको राजासे मान, स्त्री, पुत्र, भाइयोका हर्ष होता है । धनयुक्त, तथा (दाता) मुझसे मागो ऐसा कहनेवाला होता है॥ १३९ ॥ कन्यागत गुरुदशामे राजाकी रानीके आश्रयसे धनप्राप्ति, शूद्र आदि नीचोंसे कलहकी चर्चा और पुरुषोको भ्रमणभी होता है ॥१४० ॥ तुलागत गुरुदशामे खोटे फोडाओसे पीडित, पुत्र स्त्रीका शत्रु, उत्सवहीनता, मित भोजन करनेवाला, विवेकरहित तथा मनुष्य शत्रु मारनेवाला होता है ॥ १४१ ॥ वृश्चिकगत इन्द्रपूज्यकी दशामे प्राज्ञ, सामर्थ्यवाला बुद्धिश्रेष्ठ, पुत्रके उत्साहयुक्त तथा मनुष्य कर्ज रहित, रोगवाला और नियमसे हीन होता है ॥ १४२ ॥ धनके

प्रथम दशाराम गत गुरु यदि त्रिकोणगतभी हो तो सेनापति, मन्त्री, श्रेष्ठबुद्धि अथवा कुछ ग्रामोका राजा, पिता आदिके तथा स्त्रीके वचनोंमे तत्पर रहे ॥ १४३ ॥ धनके १० अंशके ऊपर गत गुरुदशामे यज्ञ आदियोकी सिद्धि, खेती, गौ, धन और परदेशवाससे मनुष्य धन पाता है॥ १४४॥

नक्रे च नीचांशगतस्य पाके बृहस्पतेर्वै परकार्यकर्ता । भवेन्नरो जाठरकर्णगुह्यामयी विशेषान्मतिवित्तहीनः ॥ १४५ ॥ गुरोर्दशा नीचलवच्युतस्य कुर्यान्निषादात्कृपितोपलब्धिम् । स्ववाक्यदोषाज्जनवंचनाद्वा वृथा कलिं वै पिशुनत्वमुच्चैः ॥ १४६ ॥ दशा गुरोः कुम्भधरस्थितस्य सद्बुद्धिविद्यानुरतं कलाज्ञम् । कलत्रवित्तादिसुखोपलब्धिं करोति मर्त्यं नृपलब्धमानम् ॥ १४७ ॥ मीनस्थितस्यामरपूज्यपाके कलाधिकः स्यान्मनुजोऽतिधीमान् । विद्याप्रसंगात्तधनो विनीतो विलासिनीप्रेमभरः सहर्षः ॥ १४८ ॥ वर्गोत्तमांशस्थितजीवपाके लोकेऽतिपूज्यः सुतदारसौख्यः । अत्यर्थसम्पत्तियुतः सहर्षो भवेद्विनीतो मनुजः कृशांगः ॥ १४९ ॥ मूढाश्रितस्यामरपूज्यपाके भवेन्नराणां च सुखासुखत्वम् । नीचारिभांशेषु च वित्तदारपरिक्षयं चामयपीडितं च ॥ १५० ॥

मकरके नीचांशक गत गुरुकी दशामे पराये काम करनेवाला मनुष्य होवै उदर, कान, गुह्यस्थानमे रोगी होवै, विशेषत. बुद्धि एव धनमे हीन होवै, ॥ १४५ ॥ नीचांशकसे उतरे मकरके गुरुदशामे निषादसे कृषिमे लाभ करता है । अपने वचनके दोषसे अथवा किसी मनुष्यके ठगनेसे व्यर्थ कलह और बडी पिशुनता ( दुर्जनता ) होवै ॥ १४६ ॥ कुंभगत गुरुकी दशा मनुष्यको बुद्धि विद्यासे युक्त, कला जाननेवाला, स्त्री धन आदिके सुख युक्त और राजासे मान प्राप्त करती है ॥ १४७ ॥ मीनगतगुरुकी दशामे मनुष्य कलामे अधिक बुद्धिमान्, विद्या प्रसंगसे प्राप्त धनवाला, नम्र, स्त्रीके पूरा प्रेमसे युक्त, हर्षसहित होता है ॥ १४८ ॥ वर्गोत्तमांश गत गुरुदशामे

लोकमे अतिपूजनीय, पुत्र स्त्री सुख अति सपत्तिसे युक्त, सहर्ष, नम्र और कृशांगवालाभी मनुष्य होता है ॥ १४९ ॥ अस्तंगत गुरुकी दशामें मनुष्योंको सुख तथा दुःखभी होते है, नीच शत्रु अंशकगत गुरुकी दशामें धन स्त्रीका क्षय तथा रोगपीडा भी होती है ॥ १५० ॥

अथ शुक्रदशाफलम् ।

स्यात्पाके भृगुजस्य रत्नयुवतीसद्वस्त्रभूषागमः सम्मानं विविधं जनेषु मदनस्याप्युद्गमत्वं नृणाम् । गीते नर्तनवाद्यकेऽधिकरुचिः सच्छीलशास्त्रादिके दाने साधुजने मतिश्च नितरां सद्विक्रये वा क्रये ॥ १५१ ॥ पूर्वोपार्जितवित्तलब्धिरतुला गोवाहनेभ्यः सुखं पुत्रेभ्यश्च कलिः कुले चपलता स्थानाद्भवेन्निश्चयात् । वैकल्यं पवनात्कफान्निजतनौ चिन्तादिततं मनो वैर नीचजनैः फलं समुदितं सामान्यमेतद् भृगोः ॥ १५२ ॥

उत्तम बली शुक्रकी दशामे रत्न, स्त्री, उत्तम वस्त्र, भूषण मिले, मनुष्योमे अनेक प्रकार सम्मान मिले तथा मनुष्योंको कामदेवका उदय होवै, गायन नाच बाजेमे रुचि होवै, उत्तम शील ( स्वभाव ) शास्त्रादिमे साधुजनमे और दानमे व्यापारमे अच्छी मति होवै ॥ १५१ ॥ मध्यबली शुक्रकी दशामे पहिले कमाये धनकी अगणित प्राप्ति, गौ एव वाहनोंसे सुख, पुत्रोंसे सुख, कुलमे कलह, स्थानसे चालन निश्चय होवै । हीनबली शुक्रदशामे अपने शरीरमे वायु कफसे विकलता होवै, चिन्ता आदिसे मन सतप्त रहै, नीच जनोसे वैर होवै इतने शुक्रके सामान्य फल है ॥ १५२ ॥

लोलं मनः संभ्रमणं विशेषादुद्वेगता स्युर्व्यसनानि पुंसाम् ।
स्त्रीवित्तसौख्यापचयत्वमुच्चैर्मेषोपयातस्य भृगोर्दशायाम् ॥ १५३ ॥
पाके वृषस्थस्य भृगोः सुतस्य सच्छास्त्रदानानुरतो विनीतः ।
कृषिक्रियासत्पशुसौख्ययुक्तः कन्याप्रजः स्यान्मनुजो धनाढ्यः १५४
भृगुसुतस्य दशा मिथुनस्थितेर्विविधकाव्यकलोत्सवयुङ्नरम् ।
परमविस्मयहास्यकथांतरं धनचयं परदेशगमोत्सुकम् ॥ १५५ ॥

कर्कगामिभृगुजस्य दशायां स्वीयकार्यकुशलोऽतिकृतज्ञः ।
उद्यमाद्द्रविणभूषणशाली स्यान्नरो हि वनितान्तरचित्तः ॥ १५६ ॥
सिंहोपयातस्य भृगोर्दशायां भार्याप्तवित्तोऽन्यधनोपजीवी ।
नरो हि पश्वादिगणान्वितः स्यात्पुत्राऽल्पसौख्यो धिषणावरेण्यः १५७
कन्याश्रितस्योशनसो दशायां भग्नोत्सवो वित्तसुखेन हीनः ।
विदेशवासी चपलो नरः स्यात्त्यक्तः स्वदारात्मजबंधुवर्गैः ॥१५८॥

मेषगत शुक्रदशामे पुरुषोको मनकी चञ्चलता, विदेश भ्रमण, विशेषतः उद्वेगता और व्यसन होवै । स्त्री, धन, सुखकी हानि विशेष होवे ॥ १५३॥ वृषगत शुक्रदशामे मनुष्य उत्तम शास्त्रमे, दानमे तत्पर रहे, नम्र होवै, कृषि-कर्म, उत्तम पशुके सुखमे युक्त, कन्या संतानवान और धनवान होवे॥ १५४॥ मिथुनगत शुक्रदशामे अनेक प्रकारकी काव्यकलाके उत्सवोंमे युक्त, परम आश्चर्यजनक, हाँसी कथांतरयुक्त, धनसमूहयुक्त और मनुष्यको परदेश गमनमें उद्यत करती है ॥१५५॥ कर्कगत शुक्रदशामे अपने कार्यमे अभिज्ञ, अति-कृतज्ञ, उद्यमसे धन भूषणवान् और अन्य स्त्रियोमे मन लगानेवाला मनुष्य होवै ॥ १५६ ॥ सिंहगत शुक्रदशामे स्त्रीसे धन पावे, पराये धनमे आजीवन करै, पशु आदिके समूहसे युक्त, पुत्रसे अल्पसौख्य और बुद्धिश्रेष्ठ मनुष्य होवै ॥१५७॥ कन्यागत शुक्रदशामे उत्सवरहित, धनसुख करके हीन, परदेश-वासी, चपल और अपनी स्त्री, पुत्र, बन्धुवर्गसे मनुष्य त्यागा रहे ॥१५८॥

कन्यानवांशास्थितभार्गवस्य पाके नृपात्तस्करतोऽर्थहानिः ।
वृथाऽटनं नीचजनैश्च सख्यं भिक्षाटनं वा ननु मानवानाम्
॥ १५९ ॥ स्वर्क्षे त्रिकोणे भृगुजस्य पाके विशिष्टनाम्ना प्रथितो नरः स्यात् । कृषिक्रियासत्यसुधान्यवित्तैर्युक्तो-ऽथवा ज्ञातिजनैर्धनाढ्यः ॥ १६० ॥ कीटोपयातस्य भृगो-र्दशायां सदाटनो वै स नरः प्रतापी । परस्य कार्ये निरतो-ऽनृणी स्यात्क्लेशानुरक्तः क्रयवित्तयुक्तः ॥ १६१ ॥ शराशन-स्थस्य भृगोर्दशायां नरो भवेत्काव्यकलाप्रवीणः । क्लेशा-

ऽन्वितः शत्रुजनैर्विशेषान्नृपाप्तमानः सुतदा०॥ १६२ ॥ शुक्रस्य नक्रोपगतस्य पाके कुस्त्रीरतः क्लेशपरः सहिष्णुः। कुटुम्बचिन्तासहितोऽरिहन्ता नरो भवेद्वातकफार्तियुक्तः ॥ १६३ ॥ कवेर्दशायां कलशस्थितस्य नरः कुकर्माभिरतः कुशीलः। व्रतोपहन्ता व्यसनाभिभूतो रोगार्दित स्यादनृतोक्तियुक्तः ॥ १६४ ॥ भृगोर्दशायां शफरस्थितस्य ज्ञानी नरेन्द्राप्तधनः प्रधानः । कृषिक्रियावित्तविलासयुक्तो नरो भवेद्वंशधरः समर्थः ॥ १६५ ॥ वर्गोत्तमे झषगतस्य भृगोर्दशायां मर्त्यः स्वनामगुणशौर्य्यधनोपपन्नः। नीरादिकार्यकरणेऽतिकृतप्रयत्नो नूनं भवेत्कफसमीरविनिर्जितात्मा ॥१६६॥ स्वोच्चस्थितो भृगुसुतस्तनुकर्मगो वा लाभेऽपि वा न सहितो न च पापदृष्टः। स्थानान्नृपालविषये बहुरत्नपूर्णोधीमान्विशालनयनो निजवंशनाथः ॥ १६७ ॥

कन्यानवांशमे स्थित शुक्रदशामे राजासे चोरसे धनहानि, व्यर्थ भ्रमण, नीच जनोंसे मैत्री वा मनुष्योंको निश्चय भीख मांगनी पडे ॥ १५९॥ तुलागत शुक्रदशामे मनुष्य विशेष नाम ( उपनाम ) से विख्यात होवै। कृषिकर्म, सत्य, उत्तम अन्न, धनोंसे अथवा जात भाइयोंसे धनाढ्य होवै ॥ १६० ॥ वृश्चिकस्थ शुक्रदशामे सर्वत्र फिरता रहै, अत्यत प्रतापी होवै और परकार्यमे तत्पर, अनृणी, क्लेशसे युक्त तथा खरीदसे, धनयुक्त होवै ॥१६१॥ धनगत शुक्रदशामे मनुष्य काव्यकलामे प्रवीण, शत्रुजनसे विशेष क्लेशयुक्त रहै, राजासे मान मिले, स्त्री पुत्रोंसे प्रसन्न रहे ॥ १६२ ॥ मकरगत शुक्रदशामे दुष्ट स्त्रीमे आसक्त, क्लेशमे तत्पर ( सहनेवाला ), कुटुबकी चितायुक्त, शत्रुहता और वात कफकी बाधायुक्त रहै ॥ १६३ ॥ कुभगत शुक्रदशामे कुकर्मोमे तत्पर, दुष्टस्वभाव, नियम तोडनेवाला, व्यसनोसे दबाया रहै, रोगसे पीडित रहे, झूंठ बोले ॥ १६४ ॥ मीनगत शुक्रदशामे ज्ञानी होवै, राजासे धन मिले, पधान होवै, कृषिकर्म, धन, विलासयुक्त रहे तथा मनुष्य अपने वंशको बढानेवाला समर्थ होवै ॥१६५॥मीन मीनांशकगत शुक्रदशामे मनुष्य अपने नाम, गुण,

पराक्रम, धनसे युक्त रहै । जलसंबंधी काम करनेमे बडा प्रयत्नवान् होवे तथा कफ, वायुसे निश्चय रहित होवै ॥ १६६ ॥ शुक्र अपने उच्चमे लग्न, दशम, लाभमेसे किसीमे पाप योग दृष्टि रहित होवै तो उसकी दशामे राजाके राज्यमे अधिकारी स्थान पावै, बहुतसे रत्नोसे पूर्ण रहै, बुद्धिमान्, विशाल नेत्र, अपने वशमे श्रेष्ठ होवे ॥ १६७ ॥

अथ शनिदशाफलम् ।

स्यात्पाके नलिनीशजस्य मनुजः श्रीमान्प्रतापाऽधिको नूनं ग्रामपुराधिकारसहितो देवद्विजार्चारतः । सद्धेमांबरवाजिकुञ्जरमुखैः सद्वाहनैः संयुतोऽत्यंतं काव्यकलाकलापकुशलः सच्छीलकीर्त्याधिकः ॥ १६८ ॥ प्राक्स्थानागमसौख्ययुक् कुलवरोऽत्यंतं विनीतः पुमान् भूदेवामरगेहतत्फलमिदं सामान्यतः कीर्तितम् । निद्रालस्यकफानिलोष्णजरुजासंपीडितः स्यात्तनौ कण्डूदद्रुविचर्चिकादिभिरथो वृद्धांगनालालसः १६९॥

उत्तम बलादि युक्त शनिकी दशामे मनुष्य धनवान्, प्रतापमे अधिक, ग्राम नगरके अधिकार युक्त निश्चय होवै । देवता ब्राह्मणके पूजनमे तत्पर रहै, उत्तम सुवर्ण, वस्त्र, घोडे, हाथी आदि वाहानोंसे युक्त, काव्यकलाओंमे अत्यत चतुर और उत्तम कीर्त्ति, उत्तम स्वभावमे अधिक गणनामे युक्त होवै ॥ १६८ ॥ मध्यबलीकी दशामे पहिले स्थानके आगमनसे सुखयुक्त रहै । अपने कुलमे श्रेष्ठ होवे, अत्यत नम्र वह मनुष्य होवे । ब्राह्मण देवतागारसे सामान्य फल पावै अर्थात् उनकी सेवा करे परन्तु फल सामान्य मिले । हीनबलादिगत शनिदशामे निद्रा, आलस्य, कफ, वायुरोग, पित्तरोगसे पीडित शरीर तथा खुजली, पामा, दाद, हैजा आदिमे पीडित होवे और बूढी स्त्रीसे संगकी इच्छा रक्खे ॥ १६९ ॥ इति शनिदशासामान्यफलम् ॥

मेषस्थितस्यार्कसुतस्य पाके प्रवासशीलो मनुजः स्वतंत्रः ।
स्यान्मर्मचर्मामयपीडितांगस्त्यक्तः स्वमात्रा निजबंधुवर्गैः॥ १७० ॥
पाके शनेर्नीचलवोज्झितस्य निरुद्यमः स्यात्पवनात्तदुःख ।
कलिप्रसंगान्मनुजोऽतिनिःस्वो विचर्चिकाद्यामयतः कृशांगः॥ १७१॥

पाके वृषस्थस्य खरांशुसूनोर्भूपालसम्मानविराजमानः । रणाङ्गणप्राप्तयशोविशेषो मेधाऽन्वितो धर्मरतो नरः स्यात् ॥ १७२ ॥ द्वन्द्वोपयातस्य शनेर्दशायां सुतार्थभोगाऽभिरतस्त्वशान्तः । ऋणाभिघातः परकार्यरक्तः स्त्रीचौरतः स्यात्पुरुषोऽतिनिःस्वः ॥ १७३ ॥ कर्काधिरूढस्य शनेर्दशायां नरः स्वतंत्रो धिषणावरेण्यः । चिन्ताऽऽतुरो वा सुतबंधुहीनः कर्णाक्षिपीडामयत. कृशांगः ॥ १७४ ॥ पंचाननस्थस्य शनेर्दशायां रोगादिबाधा बहुधा नराणाम् । कलिः कलत्रात्मजबंधुवर्गैश्चतुष्पदैर्दासजनैरसौख्यम् ॥ १७५ ॥ पाथोनसंस्थस्य शनेर्दशायां भूनीरगेहादिविधानचित्तः । विद्याप्रसंगात्तधनस्तथोच्चप्रदेशतः स्याद्विजदेवभक्तः ॥ १७६ ॥ पाके तुलाश्रितशनेर्गजवाजिरत्नहेमाम्बराद्यभिगमः स्वकुलाऽनुमानात् । ख्यातं जनेषु विजयो वनिताविलासः सौख्यं भवेच्च विविधं खलु मानवानाम् ॥ १७७ ॥

मेषगत शनिकी दशामे मनुष्य प्रवासमे रहे, स्वतन्त्र होवै, मर्मस्थानमे तथा चमडेमे रोग रहनेसे अग पीडित रहै, अपनी माता तथा बंधुगणसे त्यक्त रहे ॥ १७० ॥ नीचाशकसे उतरे शनिकी दशामे निरुद्यमी, वायुपीडायुक्त, कलहप्रसगसे अतिनिर्द्धन और वमन दस्त आदि रोगसे शरीर कृश होवै ॥ १७१ ॥ वृषगत शनिकी दशामे राजसन्मानसे विराजे, रणभूमिमे विशेष यश पावै, बुद्धिमान् तथा धर्ममे तत्पर मनुष्य होवै ॥ १७२ ॥ मिथुनगत शनिकी दशामे सुत धन भोगमे तत्पर रहे, शात न होवै, ऋणसे पीडित, पराया काम करनेवाला तथा स्त्रीसे चोरसे पुरुष अतिनिर्द्धन होवै ॥ १७३ ॥ कर्कगत शनिकी दशामे मनुष्य स्वतन्त्र रहै, बुद्धि श्रेष्ठ होवै, चिन्तासे आतुर अथवा पुत्रसे बान्धवोसे हीन रहै, कान नेत्रके रोगसे कृश अग होवै ॥ १७४ ॥ सिंहगत शनिकी दशामे मनुष्योको बहुधा रोग आदिकी पीडा होती है स्त्री, पुत्र, बधुवर्गमे कलह, चौपाया एव दासजनसे दुःख

मिले ॥ १७५ ॥ कन्यागत शनिकी दशामे भूमि, जलाशय, मकान बनानेमे चित्त रहै । विद्याप्रसगसे तथा ऊंचे स्थानसे धन पावै, देव ब्राह्मणोका भक्त होवै ॥ १७६ ॥ तुलागत शनिकी दशामे हाथी, घोडे, रत्न, सुवर्ण, वस्त्रोकी प्राप्ति कुलानुरूप होवै । मनुष्योमे विख्याति, विजय, स्त्रीविलास और अनेक प्रकारके सुख मनुष्योको मिलते है ॥ १७७ ॥

कौर्प्यौपयातस्य शनेर्दशायां वृथाऽटनः साहसकर्मयुक्तः । दयाविहीनः कृपणोऽनृतश्च नीचानुयातः परजीवनः स्यात् ॥ १७८ ॥ शरासनस्थस्य शनेर्दशायां नरेन्द्रमंत्री चतुरंघ्रियुक्तः । कान्तासुतानन्दभरो नरः स्याद्रणांगणप्राप्तयशावरेण्यः ॥ १७९ ॥ नक्रोपयातस्य शनेर्दशायां श्रमाप्तवित्तं सुभगत्वमुच्चैः । वृद्धांगनाक्लीबजनैः सखित्वं विश्वासघातेन धनच्युतिर्वा ॥ १८० ॥ शनेर्दशायां कलशस्थितस्य महत्प्रतिष्ठः स्वकुले वरिष्ठः । कृषिक्रियापुत्रधनादियुक्तो नरो भवेत्सर्वसुखैः प्रपूर्णः ॥ १८१ ॥ मीनस्थितस्यार्कसुतस्य पाके श्रेणीपुरग्रामकृताधिकारः । भवेन्नराणां द्रविणांगनाभ्यः सुखं तथोत्साहविनीतता च ॥ १८२ ॥ तुल्यं व्ययायं प्रकरोति मूढः शनिः स्वपाके रणभंगुरं च । संतोषकीर्त्त्या वियुतं मनुष्यं क्लेशैरनेकैः परितप्तचित्तम् ॥ १८३ ॥ नवांशराशिक्रममेवमुक्तं तयोर्निरुक्तं बलवत्तरं च । अत्रैव राश्यंशकवीर्यसाम्ये समानरूपं प्रवदेद्यथावत् ॥ १८४ ॥ एवं ग्रहाणां विविधैः प्रकारैर्दशाफलान्यब्जभुवेरितानि । ज्ञात्वा नराणां प्रकृतिस्वभावं समादिशेत्तस्य समानरूपम् ॥ १८५ ॥

वृश्चिकगत शनिकी दशामे व्यर्थ भ्रमण, साहसी काम, दयाहीनता, कृपणता, झूठ बोलना, नीचसंगति, परान्नादिसे आजीवन होते है ॥ १७८ ॥ धनगत, शनिकी दशामे मनुष्य राजमत्री होवै । पशु वाहन युत, स्त्री पुत्रके आनदसे परिपूर्ण, रणभूमिमे यश प्राप्ति और श्रेष्ठता मिले ॥ १७९ ॥ मकर गत

शनिकी दशामे कष्टसे धन प्राप्ति, बडा ऐश्वर्य, बूढी स्त्री तथा नपुसक मनुष्योसे मित्रता अथवा विश्वासघातसे धनहानि होवै ॥ १८० ॥ कुंभगत शनिकी दशामे मनुष्य बडी प्रतिष्ठावाला, अपने कुलमे श्रेष्ठ, कृषिकर्म, पुत्र, धन आदिसे युक्त, समस्त सुखोसे पूर्ण होता है ॥ १८१ ॥ मीनगत शनिकी दशामे नगर, ग्राम, सीमाका अधिकार मिले, स्त्रियोसे धनागम होवै, सुख मिले तथा उत्साह और नम्रता होवै ॥ १८२ ॥ अस्तंगत शनिकी दशामे आमद खर्च बराबर, रणमे भग्नता, संतोष एव कीर्तिसे युक्त, अनेक क्लेशोसे सतप्त चित्त करता है ॥ १८३ ॥ यह दशाफल नवाश और राशिक्रमसे कहा है, इन राशि-नवाशकोमेसे जो विशेष बलवान् हो उसका फल विशेष होता है, दोनोका बल समान होनेमे समान फल कहना ॥ १८४ ॥ इस प्रकार ग्रहोके अनेक प्रकार दशाफल ब्रह्माके कहे हुए जानने, उसमे मनुष्योका स्वभाव प्रकृति, जाति, कुल, देशादि स्वबुद्धिसे विचारके यथावत् फल कहना ॥ १८५ ॥

लग्नदशाफलम् ।

**तनोर्दशा स्यात्त्रिलवक्रमेण चरे शुभा मध्यफलाऽधमा च ।**
**कष्टा शुभा मध्यफला स्थिरे च द्व्यंगेऽधमा मध्यफलोत्तमा च॥१८६**
**शुभमध्याधमकान्यथो फलानि लग्नेशस्य दशोदितानि तानि ।**
**कल्प्यानीह तथा बलानुमानाल्लग्नस्याधिपतेस्तु बुद्धिमद्भिः॥१८७॥**

लग्नदशाका फल कहते है कि—चर लग्न हो तो प्रथम द्रेष्काणमे शुभ, दूसरेमे मध्यम, तीसरेमे अधम । स्थिर लग्नमे प्रथममे कष्ट, दूसरेमे शुभ, तीसरेमे मध्यम । द्विस्वभावमे प्रथममे कष्ट, दूसरेमे मध्यम, तीसरेमे उत्तम फल देती है ॥ १८६ ॥ यहा बुद्धिमानोने लग्नेशके बलानुसार शुभ, मध्यम और अधम फल लग्नेशके सदृश लग्नदशामेभी कहने ॥ १८७ ॥

अथाष्टकवर्गदशायामतर्दशाक्रमः ।

**एकर्क्षेऽर्द्धं त्र्यंशकं वै त्रिकोणे तुर्यं भागं रन्ध्रबंधुस्थयोश्च ।**
**द्यूनेऽद्र्यंशं पाचयत्येव खेटश्चेदेकर्क्षे द्व्यादयो यो बली सः ॥१८८॥**

दशापतिके साथ जो ग्रह हो वह आयेका पाचक होता है उसमें त्रिकोण-गत तीसरे भागका, ४ । ८ भाववाला चौथाईका, सप्तमगत ग्रह सप्तमांशका पाचक होता है। यदि एक स्थानमें दो आदि ग्रह होवें तो जो उनमेंसे बलवान् है वही पाचक होता है सभी नहीं होते। इसका विस्तार सम्च्छेदक्रमसे पहिले खुलासा लिखा है ॥ १८८ ॥

**सिंहीपुत्रेणाऽन्वितं चेद्विलग्नं प्रोक्तस्थानेष्वन्यखेटा न चैवम् । हन्ता राहुः सौरितुल्यं फलं तद्वाच्यं नूनं तत्र चांतर्दशायाम् ॥१८९॥ अंतर्दशाविभागे तु रवीन्द्वो राहुना सह । यमतुल्य-फलं ज्ञेयं नैवान्येषां क्वचिज्जगुः॥१९०॥ अर्केन्दुपृथ्वीतनया-ऽर्कजेभ्यः सिंहीसुतस्यैव दशाऽपहारे । मृतिं रुजं मृत्युसमं शुभं चेद्दशाफलं तत्र वदेद्धिमिश्रम् ॥ १९१॥ यस्मिन् भावे सैंहिकेयस्तु यस्य पुंसः सूतौ स्यात्तदीशस्य पाके । मृत्यु-र्वाच्यस्तद्द्विषोऽन्तर्दशायां होराविद्भिर्निश्चितं तस्य यद्वा॥१९२॥**

पूर्वाचार्योंने राहुकीभी अंतर्दशा कही है, उनका मत कहते हे कि, राहु लग्नमे हो, पूर्वस्थानोंमे अन्य ग्रह न होवें तो पाचकभी राहुही होता है। इसका फल निश्चय करके अंतर्दशामे शनिके तुल्य कहना॥ १८९ ॥ अंतर्दशाविभागमें सूर्य चंद्रमाका राहुके साथ होनेसे शनिके समान कहना अन्यका नहीं, ऐसा किसी आचार्योंका मत है ॥ १९० ॥ राहुदशामें सूर्य, चन्द्रमा, मंगल, शनिके अंतर्दशा मृत्यु वा मृत्युतुल्य रोग करते हैं। यदि वह अंतर्दशेश शुभ होवें तो मिश्रित फल कहना ॥ १९१ ॥ जिस पुरुषका राहु जिस भावमें है उस भावस्वामीकी दशामें उसके शत्रुकी अन्तर्दशामें ज्योतिषज्ञोंने निश्चय उसकी मृत्यु कहनी ॥ १९२ ॥

**लग्नस्य पाके यदि लग्नपस्य भवेत्सपत्नस्य दशापहारः । स्यान्मानवानां निधनं त्ववश्यं लग्नं शुभाख्यैः सहितं न चेत्स्यात् ॥ १९३ ॥ विलग्नजन्माधिपतिर्नभोगः षडष्टक-**

श्चाष्टकवर्गके च। शून्यर्क्षगस्तस्य दशाविभागे भवेदवश्यं निधनं नरस्य ॥ १९४ ॥ नीचस्थितश्चेत्तनुनायकोऽपि व्ययस्थितो वा निधनस्थितो वा । स्यात्तद्दशायां निधनं त्ववश्यं क्रूरग्रहैश्चेत्सहितं विलग्नम् ॥ १९५ ॥ विलग्नजन्माष्टमभे यदा वा विलग्नजन्मोदयके तथैव। विलग्ननीचोदयकेऽपि तेषां शून्ये फले चेन्निधनं प्रवाच्यम् ॥ १९६ ॥ जाता नरा ये ह्युभयत्र योगेऽप्यंतर्दशायां प्रवदेदरिष्टम् । तेषां सुधीभिर्नन्नु जातकज्ञैः शांति ग्रहाणां जपहोमदानैः ॥ १९७ ॥ यस्मिन्नवांशे वनिताधिनाथो भवेत्प्रसूतौ ननु मानवानाम् । याते तदीशस्य दशांतराले जायाधिपे तत्र कलत्रयोगम्॥१९८॥

लग्नदशामे लग्नेशके शत्रुका अंतर होवै तो मनुष्योकी उसमे अवश्य मृत्यु होती है परतु यदि लग्नमे शुभग्रह न हो ॥ १९३ ॥ लग्नेश छठा वा आठवा हो अष्टकवर्गमे भी शून्य राशिमे होवै तो उसकी दशा दशांतरमे मनुष्यकी अवश्य मृत्यु होती है ॥ १९४ ॥ लग्नेश नीचराशिगत १२ वा ८ भावमे होवै तो उसकी दशा अतरदशामे अवश्य मनुष्यकी मृत्यु होती है । परतु यदि लग्नमे पापग्रहभी हो ॥ १९५ ॥ जन्मलग्नसे अष्टम लग्नमे और लग्ननीचमे अष्टकवर्गके शून्य फल होवै तो लग्नेशदशा दशातरमे मृत्यु होती है ॥ १९६ ॥ जो मनुष्य उक्त प्रकारके मृत्युयोग एव पूर्वोक्त दीर्घायु योगमे भी जन्मे है उनको अरिष्टदायमे अरिष्टमात्र होता है । उनकी शान्ति बुद्धिमान् ज्योतिषियोने नव ग्रहजप, हवन, दानसे करानी ॥ १९७ ॥ जिस नवांशकमे सप्तमेश है उसके स्वामीके दशा दशांतरमे मनुष्योको अवश्य स्त्री प्राप्ति होती है ॥ १९८ ॥

दशाधिपे नैधनभावसंस्थे रणांगणे चेद्रिपुणा हते च । स्यात्तद्दशायां निधनं त्ववश्यमशंकितं ज्योतिषिकैरिहोक्तम् ॥ १९९ ॥ जन्मर्क्षनाथो निजलग्ननाथ· शत्रोर्दशायां मतिविभ्रमं च। रिपोर्भयं राज्यपरिच्युतिश्च कलिः खलैः स्याद्बलहीनता च ॥ २०० ॥ यदि खलद्युचरस्य दशांतरे

खलखगस्य किलांतरजा दशा । प्रकुरुते निधनं द्रविणक्षयं तनुभृतां नितरां च रिपूदयम् ॥ २०१ ॥ अंतर्दशा चैकगृहस्थितानां द्वित्र्यादिकानामशुभग्रहाणाम् । करोति दैन्यं च रुजं विवादं धनक्षयं शत्रुभयं नराणाम् ॥ २०२ ॥

दशेश अष्टम भावमे हो अथवा युद्धमे हारा हो तो उसकी दशामे अवश्य ज्योतिषियोने मृत्यु कही है ॥१९९॥ जन्मराशिका स्वामी वा जन्मलग्नका स्वामी शत्रुकी दशाके अतरमे बुद्धिभ्रम, शत्रुका भय, राज्यमे च्युति, दुष्टजनोसे कलह और निर्बलता करती है ॥ २०० ॥ यदि पापग्रहकी दशामे पापग्रहका अतर होवै तो मृत्यु, धनक्षय और शत्रुका उदय इनमेसे कोई मनुष्योको निरन्तर करता है ॥ २०१ ॥ दो तीन आदि एक राशिस्थित पापग्रहोके दशा और अतरदशा दीनता, रोग, कलह, धनहानि और शत्रुभय मनुष्योको करती है ॥ २०२ ॥

अंतर्दशा चैकगृहस्थितानां सतां निजोच्चर्क्षविवर्जितानाम् । प्रेष्यं मनुष्यं द्रविणेन हीनं करोति दीनं च विरोधयुक्तम् ॥ २०३ ॥ जामित्रगानां गगनेचराणामंतर्दशायां मरणं गृहिण्याः । धनक्षयः स्यात्कलहादिसंगो रोगः कुभोगः खलु नीचसंगः ॥ २०४ ॥ रन्ध्रस्थितानां गगनेचराणामंतर्दशाऽरिष्टसमुद्भवं च । द्रव्यस्य नाशं व्यसनानि पुंसां शत्रूदयं चामयपीडनं च ॥ २०५ ॥ व्योमौकसां पंचनवर्क्षगानामन्तर्दशा संजनयेच्च वित्तम् । विलासिनीनंदनजाततोष हर्षोदय कांतिविवर्द्धनं च ॥ २०६ ॥ सुखस्थितानां च नभश्चराणामन्तर्दशा सौख्यमतीव नित्यम् । स्त्रीपुत्रमित्रद्रविणादिकानां निरोगितां मानसमुन्नति च ॥ २०७ ॥

एक भावगत शुभग्रह जो उच्च स्वराशिके न हो तो उनकी दशान्तर्दशा मनुष्यको पराया प्रेष्य, धनहीन, दीन और विरोधयुक्त करती है ॥ २०३ ॥ सप्तमगत पापग्रहोंकी अतर्दशामे स्त्रीका मरण, धनक्षय, कलहादिका सयोग, रोग, निन्द्य भोग और नीच सग निश्चय होता है ॥२०४॥ अष्टमगत ग्रहोंकी

अतर्दशामे अरिष्टकी उत्पत्ति, धनका नाश, व्यसन, शत्रुका उदय और रोगसे पीडन पुरुषोको होते है ॥ २०५ ॥ पचम नवमगत ग्रहोकी अतर्दशामे धन देती है, स्त्री पुत्रपक्षसे हर्ष, कांतिवृद्धि होती है ॥ २०६ ॥ चतुर्थस्थानगत ग्रहोकी अतर्दशामे नित्य स्त्री, पुत्र, मित्र, धनादियोका अतिशय सौख्य होता है तथा निरोगिता और मानोन्नति होती है ॥ २०७ ॥

अथ रवेरतर्दशाफलानि ।

**पङ्केरुहेशस्य दशांतराले पङ्केरुहेशः कुरुते नराणाम् ।**
**सन्मित्रपुत्रद्रविणादिसौख्यं कान्ताविलासं शुभदा दशा चेत्॥२०८॥**
**सरोजिनीशस्य दशांतराले नक्षत्रनाथः कुरुते नराणाम् ।**
**प्रसादमद्भ्यो ग्रहणी च पाण्डुं क्षयं यदा कष्टफला दशा चेत्॥२०९॥**
**महीसुतः सूर्यदशान्तराले सद्रत्नहेमाम्बरजातसौख्यम् ।**
**विख्यातकीर्तिं विपुलप्रतापं पित्तानलार्त्तिं नृपवित्तलब्धिम् ॥२१०॥**
**भानोर्दशायां शशिजे मनुष्यो भग्नोद्यमः स्याच्चपलः प्रमादी ।**
**विचर्चिकादद्रुविकारपूर्णैः प्रपीडिताऽङ्गो द्रविणेन हीनः ॥ २११ ॥**
**स्यान्मतिर्द्विजसुरार्चनेऽमला धान्यवस्त्रपरिसंग्रहेषु च ।**
**मानवाहनधनागमो नृपाद्गीष्पतौ रविदशान्तरे नृणाम् ॥ २१२ ॥**
**शूलं च शीर्षोदरकर्णदेशे विदेशयानं कलहाकुलत्वम् ।**
**करोति तीव्रं ज्वरमस्वतंत्रंदैत्यार्चितो भानुदशां प्रयातः ॥ २१३ ॥**
**नीचतस्करभयं जलभीतिं वैरितां वितनुते निजमित्रैः ।**
**भानुजः कमलिनीशदशायां दद्रुतश्च नृपतेरतिदुःखम् ॥ २१४ ॥**

सूर्यदशामे सूर्यका अतर मनुष्योको अच्छे मित्र, पुत्र, धन आदिका सुख, स्त्री विलास करता है, यदि सूर्य शुभद हो ॥२०८॥ सूर्यदशामे चद्रमा मनुष्योंको जलसंबंधी कामसे लाभादि तथा अतिसार, पाडु, क्षयरोग करता है, यदि चन्द्रमा कष्ट फलवाला हो ॥ २०९ ॥ सूर्यमे मंगलका अतर उत्तम रत्न, सुवर्ण, वस्त्रसे उत्पन्न सौख्य, विख्यात कीर्ति, बडा प्रताप, राजासे धनलाभ और पित्त वातरोगसे पीडा करता है ॥ २१० ॥ सूर्यगत बुधांतरमे मनुष्य निरुद्यमी, चपल, प्रमादवाला, हैजा, दाद आदि विकारोसे पीडित

शरीर और धनहीन होता है ॥ २११ ॥ सूर्यदशागत गुरुके अंतरमें देव-ब्राह्मणके पूजनमें बुद्धि, निर्मल अन्न वस्त्र संग्रहमें भी तत्परता तथा मनुष्योंको राजासे मान, वाहन, धन मिलते हैं ॥ २१२ ॥ सूर्यदशामें शुक्रांतरमें शिर, पेट, कानमें शूल, विदेश गमन, कलहसे आकुलता, तीव्रज्वर, स्वतन्त्रतासे रहित करता है ॥ २१३ ॥ सूर्यमें शनि नीचसे चोरसे जलसे भय, मित्रोंमें वैर, दाद रोगमें तथा राजामें अति दुःख करता है ॥ २१४ ॥

अथ चंद्रान्तर्दशाफलानि ।

क्षयामयार्ति प्रकृतेर्विकारं विदेशयानं कलहं स्वकीयैः ।
सद्धर्मकर्मद्रविणेन हीनं विधोर्दशायां कुरुते दिनेशः ॥ २१५ ॥
मुक्ताफलैः सद्द्रविणैः समेतो लाभान्वितो वारिजकर्मणा च ।
भवेन्मनुष्यो वनितादिसौख्ययुतः शशांके यदि चंद्रदाये ॥ २१६ ॥
रक्तपित्तकलिसंभ्रमदोषं शत्रुता वितनुते स्थलहानिम् ।
मंगलः कुमुदिनीशदशायां पीडनं च जननीपितृवर्गे ॥ २१७ ॥
गोगजाश्वधनभूमिविद्यया संयुतो हि मनुजः क्षमान्वितः ।
विश्रुतोऽन्यविषये पृथुस्तनयं बोधने शशिदशांतरस्थिते ॥ २१८ ॥
गोगजाश्वधनभूसुतोत्सवैः सद्विलासवरधर्मविद्यया ।
संयुतो भवति लोकविश्रुतो वाक्पतौ शशिदशांतरे गते ॥ २१९ ॥
सद्विलासविविधांगनाजनैर्मौक्तिकैर्विविधभूषणैर्धनैः ।
संयुतः शशिदशांतरे सिते धान्यकैः कृषिजलोद्भवैः पुमान् ॥ २२० ॥
चौरभूपरिपुवह्निजं भयं मानवस्य वनितात्मजं सुखम् ।
रुक्चयं व्यसनतां करोत्यलं पिंगलः शशिदशांतरस्थितः ॥ २२१ ॥

चन्द्रदशामें सूर्यका अंतर मनुष्यको क्षयरोग पीडा, स्वाभाविक विकार, विदेश गमन, अपने मनुष्योंसे कलह, उत्तम धर्म कर्म तथा धनसे हीन करता है ॥ २१५ ॥ चन्द्रदशा चन्द्रांतरमें मनुष्य मोती उत्तम धनसे युक्त रहता है, जल-संबंधी काममें लाभ होता है, स्त्री आदिका सुख मिलता है ॥ २१६ ॥ चन्द्र-दशामें मंगलांतर रक्त पित्तदोष, कलह, संभ्रम, शत्रुता, भूमि हानि और मातृ-

पितृपक्षमे पीडन करता है ॥ २१७ ॥ चन्द्रमागत बुधमे गौ, हाथी, घोडा, भूमि, विद्यासे सयुक्त, क्षमावान्, अन्य देशोमे बडे नामसे विख्यात मनुष्य होता है ॥ २१८ ॥ चन्द्र दशागत गुरुके अन्तरमे मनुष्य गौ, हाथी, घोडे, धन भूमि पुत्रोत्सवसे युक्त श्रेष्ठ विद्या, एव धर्मसे उत्तम विलाससे युक्त, लोकमे विख्यात होता है ॥ २१९ ॥ चन्द्रदशागत शुक्रातरमे मनुष्य अनेक प्रकारकी स्त्रियोसे, उत्तम विलाससे, मोती अनेक भूषण धनसे सयुक्त रहता है ॥ २२० ॥ चन्द्र दशागत शन्यतरमे मनुष्यको चोरसे राजासे अग्निसे भय, स्त्री पुत्रोका सुख, रोगोका पुंज और व्यसनता करता है ॥ २२१ ॥

अथ भौमांतर्दशाफलानि ।

दुर्गादरण्यान्नृपतेर्धनाढ्यस्तुल्यो भवेन्ना पितृबंधुवर्गैः । ज्ञानी प्रचण्डो विजयाधिशाली विकर्तने भौमदशांतरस्थे ॥२२२॥ गतोत्सवः पित्तकफाधिकः स्यान्नानाजनानां हरणेऽतिदक्षः । बहुप्रकारैरुपजीवनार्थं द्विजाधिपो भौमदशांतरस्थः॥२२३॥ सद्वित्तभूषाम्बरमौक्तिकानि नित्योत्सवानंदमहत्पदानि । करोत्यलं पित्तकफार्तिमिंदुः कुजस्य पाके प्रवदंति केचित् ॥ २२४ ॥ वैरितस्करनृपामयार्दितः पीडितो हि मनुजो गतोत्सवः । वर्जितः सुतविलासिनीधनैश्चन्द्रजे कुजदशांतरस्थिते ॥ २२५ ॥ गोहयादिवरवाहनैर्युतः पुत्रमित्रवनितादिसत्सुखैः । धर्मविन्नृपधनः कुलाधिकः स्यान्नरः कुजदशांतरे गुरौ ॥ २२६ ॥ चलमनाः श्वसनव्यसनाकुलो निजजनैर्द्रविणैः परिवर्जितः । हतबलः परदेशरतः पुमान् भृगुसुतेऽवनिजस्य दशांतरे ॥ २२७ ॥ स्थानभ्रंशो मृत्युतुल्यप्रपीडा कांतापुत्रस्वीयवर्गेषु पीडा । क्लेशोऽत्यंतं मानहानिर्नराणां धात्रीपुत्रस्यांतरालेऽर्कसूनौ ॥ २२८ ॥

मंगलदशाके सूर्यांतरमे मनुष्य किला वन और राजासे धनवान् होता है, पिता एवं बन्धुवर्गके तुल्य होवै, ज्ञानी, प्रचड विजयी होवै ॥ २२२ ॥ भौम

चन्द्रमें उत्सवराहित होवे, पित्त कफ अधिक, अनेक मनुष्योंके अनेक प्रकारसे गुजरके लिये ठगनेमे अति चतुर होवै ॥ २२३ ॥ किसीका मत है कि, इसमे उत्तम धन, भूषण, वस्त्र, मोती, नित्य उत्सवोसे आनन्द, बडे पद और पित्तकफसे पीडा करता है ॥ २२४ ॥ मं० बु० मे शत्रु चोर राजा रोगसे पीडित रहै, उत्सव न होवै, पुत्र स्त्री और धनसे रहित रहै ॥ २२५ ॥ मं० गु० मे गौ घोडा आदि श्रेष्ठ वाहनोसे पुत्र मित्र स्त्री सुखसे युक्त रहै। धर्म जानै, राजासे धन पावै, अपने कुलमे वह मनुष्य अधिक श्रेष्ठ होवे ॥२२६॥ मं० शु० मे मन चञ्चल रहै, वायुरोगव्यसनमे व्याकुल होवे, अपने मनुष्य तथा धनसे वर्जित रहै, बलहीन होवे और मनुष्य परदेशवासी होवे॥२२७॥ मं० श० मे स्थानभ्रष्ट होवै, मृत्युतुल्य पीडा, स्त्री पुत्रादि अपने मनुष्योको पीडा होवै, अत्यन्त क्लेश एव मानहानि होवे ॥ २२८ ॥

अथ बुधान्तर्दशाफलानि ।

स्वस्थानतः संचलनं करोति नानामयैः पीडनकं त्वकस्मात्
धनागमं धर्मचयं नराणां विकर्तनः सौम्यदशां प्रविष्टः॥२२९॥
सद्वारणानां च तुरंगहेम्नां सदंबराणां च सुविद्रुमाणाम् । भंव-
दवाप्तिर्बहुवैभवानां सूर्ये ज्ञपाके प्रवदंति केचित् ॥ २३० ॥
मृतप्रजासंभवमल्पतोषं पामामयार्ति पशुपीडनं च । कुस्त्री-
रति ज्ञातिजनाप्तवित्तमिन्दुर्ज्ञपाके कुरुते नराणाम् ॥ २३१ ॥
ऊर्ध्वाङ्गगुह्यामयपीडितः स्याद्बहुव्ययार्त्तः सुतदारहीनः ।
विलुप्तधर्मोऽन्यजनेषु तुष्टो बुधस्य मध्ये वसुधातनूजे
॥ २३२ ॥ कांतासुतानंदयुतोऽरिहन्ता सद्धर्मकर्माभिरतो
विनीतः । मंत्री नरः स्यात्पितृमातृदुःखी बृहस्पतौ सौम्य-
दशांतरस्थे ॥ २३३ ॥ विविधभूषणवस्त्रधनान्वितः सुधिषणो
द्विजदेवसमर्चने । विबुधसाधुजनेष्वतिसादरो बुधदशां-
तरगे दनुजार्चिते ॥ २३४ ॥ नानायासैश्चापि संरोधनैर्वा
कुर्यान्नित्यं निश्चयं देहभाजाम् । नानाबाधामिन्दुपुत्रस्य

पाके दैत्यामात्यः संवदंतीह केचित् ॥ २२९ ॥ कदन्न-
पानासुखयुक् प्रतापी नीचप्रियोऽत्यंतमृदुस्वभावः । सद्धर्म-
कान्ताद्रविणेन हीनो नरोऽर्कजे सौम्यदशांतरस्थे ॥ २३६ ॥

बुधदशान्तर सूर्यांतरदशामे स्थानचालन, अकस्मात् अनेक रोगोसे पीडन, धनकी आमद, धर्मका समूह करता है ॥ २२९ ॥ किसीका मत है कि, उत्तम हाथी, घोडे, सुवर्ण, वस्त्र, मूगाओकी प्राप्ति, बहुत ऐश्वर्य होवै ॥ २३० ॥ बु० च० मे मरी संतान होनेसे अप्रसन्नता, खुजली, फुन्सीसे पीडा, निंद्यस्त्रीसे रति और जात विरादरीसे धन होवै ॥ २३१ ॥ मस्तक और गुह्यस्थानमे रोगसे पीडित रहै। बहुत खर्चसे पीडित, स्त्री पुत्रोसे हीन रहै। धर्म लोप होवै, अन्य मनुष्योमे खुश रहै ॥ २३२ ॥ बु० बृ० मे स्त्री पुत्रोके आनन्दसे युक्त रहै, शत्रुको मारे, उत्तम धर्म कर्ममे तत्पर रहे, नम्र होवै, मन्त्री होवै तथा मनुष्ये पिता माताको दुःख करै ॥ २३३ ॥ बु० शु० मे अनेक अनेक प्रकारके भूषण, वस्त्र, धनसे युक्त होवै, देव ब्राह्मण पूजनमे सद्बुद्धि होवै । देवता एव साधुजनोमे आदरसहित रहै ॥ २३४ ॥ किसीका मत है कि, अनेक कष्टोसे अथवा कैदसे निश्चय नित्य अनेकप्रकारका कष्ट मनुष्योको करता है ॥ २३५ ॥ बु० श० मे कोदौ सॉवा आदि निन्द्य अन्न पानसे असुख रहे । प्रतापी होवै परन्तु नीचजनोको प्यारा माने, मृदु स्वभाव होवै, उत्तम धर्म, स्त्री और धनसे हीन होवै ॥ २३६ ॥

अथ गुर्वन्तर्दशांतरफलानि ।

नरेशमान्यः सुखभोगवित्तयुक्तः सभायां सुजनेषु पूज्यः ।
विशिष्टनाम्ना प्रथितो नरः स्याद्भानौ सुराचार्यदशांतरस्थे
॥ २३७ ॥ कांतासुतप्रीतिकरो विनीतः ख्यातो धनी भूपति-
लब्धमानः । विद्यामहोत्साहपरो नरः स्यात्कलाधरे जीवदशां-
तरस्थे ॥ २३८ ॥ शिरोऽक्षिगुह्यामययुङ्मनुष्यो विदेशवासी
विबलोऽल्पवित्तः । पराश्रयी स्यात्कलहानुरक्तो भौमे सुरे-
ज्यस्य दशांतरस्थे ॥ २३९ ॥ सौख्यार्थसद्रोगयुतो नरः

स्यात्संग्रामसम्प्राप्तयशोविशेषः । प्रौढप्रतापी धिषणस्य पाके भौमे प्रविष्टे प्रवदंति केचित् ॥ २४० ॥ मंदोत्सवः स्यात्सलिलप्रमादी विदेशवासी चपलो विवादी । अधर्मयुङ्मस्तकपीडितो ना चन्द्रात्मजे जीवदशांतरस्थे ॥ २४१ ॥ स्त्रीपुत्रवित्तालयवाहनानां सद्बुद्धिकौशल्यसुरार्चनानाम् । करोति लाभं शशिजः सुरेज्यदशां प्रविष्टः प्रवदंति केचित् ॥२४२॥ सद्वस्त्रसस्यग्रहणेऽतिशीलः सद्धर्मविद्यास्वपि वह्निदीप्तः । नूनं नरो वातकफार्दितः स्याद्दैत्यार्चिते जीवदशांतरस्थे ॥ २४३ ॥ स्याद्धनैर्निजजनैर्विवर्जितः श्लेष्मवातकलहैः प्रपीडितः । स्यान्नरो व्यसनयुक्तवौ गुरोरंतरे च जगदुः कचिद्विद ॥ २४४ ॥ पामाविषाद्यैः परिपीडितः स्यान्नरो विरोधी पशुवित्तयुक्तः । कुस्त्रीरतः प्रेष्यजनाभिततो मन्दे सुराचार्यदशां प्रयाते ॥ २४५ ॥

गुरुदशागत सूर्यके अन्तरमें राजमान, सुख, भोग, धनसे युक्त होता है। सभामें सज्जनोंमें पूज्य विशेष नाम ( उपाधि ) से विख्यात होवे ॥ २३७ ॥ बृ० च में स्त्री पुत्रमें प्रसन्नता, नम्रता मिले, विख्यात, धनवान्, राजामें सम्मान, विद्या बडे उत्साहमें तत्पर मनुष्य रहे ॥ २३८ ॥ बृ० मं० में शिर नेत्र गुह्यस्थानमें रोगी, विदेशवासी, निर्बल, अल्पधनी, पराये आश्रयमें रहना तथा कलहमें अनुरक्त मनुष्य रहता है ॥ २३९ ॥ किसीका मत है कि, सुख धन उत्तम भोगयुक्त मनुष्य होता है । संग्राममें यश विशेष पावे, बडा प्रताप होवै, ये दो प्रकारके फल गुरु मंगलके शुभाशुभतामें होते हैं ॥ २४० ॥ बृ० बु० में उत्सव मन्द होवै, जलसंबंधी प्रमाद होवे, विदेशवास, चपल, झगडालू, अधर्मयुक्त होवै, शिरमें पीडा मनुष्यके रहै ॥ २४१ ॥ किसीका मत है कि, स्त्री, पुत्र, धन, घर, वाहनोंका तथा उत्तम बुद्धिकी चातुर्यता, देवतार्चनोंका लाभ करता है ॥ २४२ ॥ बृ० शु० में उत्तम वस्त्र अन्न लेनेमें आसक्त, उत्तम विद्यामेंभी आसक्त रहै, अग्नि बलवान् रहे और मनुष्य वात कफ रोगसे पीडितभी

निश्चय रहे ॥२४३॥ किसीका मत है कि, धन और अपने मनुष्योसे वर्जित रहै। श्लेष्म, वात तथा कलहसे पीडित रहै और व्यसनयुक्तभी मनुष्य रहै ॥ २४४ ॥ बृ० श० मे खुजली विष आदिसे पीडित, विरोधी, पशुधनसे युक्त, कुस्त्रीमे आसक्त, दूतजनसे संतप्त मनुष्य रहता है ॥ २४५ ॥

अथ शुक्रांतर्दशाफलानि ।

नृपभयं निजबंधुनिमित्तजं धनविनाशनकं कुरुते नृणाम् । गुदविलोचनशूलमरेः कलिं भृगुदशांतरगः खरदीधितिः ॥ २४६ ॥ मौलिदंतनखपीडितः पुमान् पित्तकामलगरार्दितो भवेत् । श्वापदाच्च नृपतेर्भयार्दितो भार्गवांतरगते तुहिनांशौ ॥ २४७ ॥ रिपुगणाद्विजयो हि रणांगणे द्विजसुरार्चनदानमतिर्नृणाम् । नृपतितः प्रमदाश्रयतो धनं ह्युशनसोऽन्तरगे हिमगौ क्वचित् ॥ २४८ ॥ रुधिरपित्तरुजा विकला तनुः क्षतरदामययुग्विगतोत्सवः । धरणिजे भृगुजस्य दशांतरे कुवनिताजनसंगपरो नरः ॥ २४९ ॥ विविधमानधनागमनं भवेत्तनुभृतां नृपतेश्च धरागमम् । धरणिजे भृगुजस्य दशांतरे विविधवस्तुसुखं जगदुः क्वचित् ॥ २५० ॥ वृक्षात्फलाढ्यै पशुतो धनाढ्यः कांताविलासी नृपलब्धमानः । दूरं तु कार्याभिरतोऽभिमानी चन्द्रात्मजे शुक्रदशांतरस्थे ॥ २५१ ॥ मखमहोत्सवपुण्यपरो नरः सुवनितात्मजबंधुजनान्वितः । उशनसोऽतरगेऽमरपूजिते सुवचसा नृपलब्धमहत्पदः ॥२५२॥ रिपुक्षयं ग्रामपुराधिपत्यं मित्रोन्नतिं वित्तसमागमं च । करोति नूनं प्रमदाविलासं भानोः सुतः काव्यदशां प्रविष्टः ॥२५३॥

शुक्रदशागत शनिके अतरमे अपने बधुनिमित्त राजासे भय होवै तथा मनुष्योका धन नाश करता है । गुदा नेत्रमे शूल, शत्रुसे कलह करता है ॥२४६॥ शु० चं० मे शिर दांत नखोमे पीडा, पित्त, कामला रोगसे पीडित रहै । कुत्ता, व्याघ्र आदि दुष्ट जंतुसे तथा राजासे भय पीडित रहै ॥२४७॥

मतांतर है कि, रणमें शत्रुमे जय, देव ब्राह्मण पूजनमें मनुष्योंकी बुद्धि होवै । राजामे तथा स्त्रीके आश्रयसे धन होवै ॥ २४८ ॥ शु० म०मे रुधिर पित्तरोगसे शरीर विकल रहे, चोट लगनेसे तथा दंतरोगसे युक्त रहे, खुशी न होवै और कुस्त्रीमगमें तत्पर रहे ॥ २४९ ॥ मतांतर है कि, अनेक प्रकार मान, धनका आगम होवै । राजासे भूमि मिले तथा मनुष्योंको अनेक वस्तुका सुख होवै ॥ २५० ॥ शु० बु० मे वृक्षसंबंधी फलसंबंधी कृत्यमे पशुसे धन, वाहन युक्त होवै । स्त्री विलास और राजामे मान मिले, दूरस्थानमें कार्यरत रहै, अभिमानी होवै ॥ २५१॥ शु० बृ० मे यज्ञ महोत्सव और पुण्यमे मनुष्य तत्पर रहै । उत्तम स्त्री, पुत्र, बधु, जनसे युक्त रहै, अच्छी वाणी करके राजासे बडा पद पावै ॥ २५२ ॥ शु० श० में शत्रुक्षय होवै, ग्राम नगरका आधिपत्य मिले, मित्रोंकी उन्नति, धनका समागम होवै और बूढी स्त्रीसे विलास करै तथा काव्यमें प्रवीण रहै ॥ २५३ ॥

अथ शन्यन्तर्दशाफलानि ।

सुखधनप्रमदात्मजवर्जितो रिपुजनामयतस्त्वतिपीडितः ।
दिनकरे रविजस्य दशांतरे कलहकृत्परदेशरतः पुमान् ॥ २५४ ॥
हतोत्सवं बंधुविरोधयुक्तं कांतामृतिं वा हरणं करोति ।
दयाविहीनं कलहानुरक्तं निशाकरो मंददशां प्रविष्टः ॥ २५५ ॥
सुखधनात्मजवित्तसुखक्षतिं तनुभृतां चलनं च निजस्थलात् ।
विकलतामतिमानहतिं करोत्यवनिजोऽर्कसुतांतरसंस्थितः ॥२५६॥
सुतधनात्मजवित्तसमुन्नतो नृपतिलब्धधनोऽतिविचक्षणः ।
कफसमीरणपीडनयुङ्नरः शशिसुते रविजस्य दशां गते ॥२५७ ॥
विविधकाव्यकलोत्सवभोगयुङ्नृपधनो बहुसज्जनपूजितः ।
सुवदनामदनानुभवः पुमान् सुरगुरौ रविजस्य दशां गते ॥ २५८ ॥
सुवदनात्मजभूषणसद्यशःसुसहितो धनधर्मसुखैर्नरः ।
हतरिपुर्ननु देशपुराऽधिपः कमलिनीशसुतांतरगे भृगौ ॥ २५९ ॥
कमलिनीशसुतस्य दशांतरे कुतनयस्य यदांतरजा दशा ।
तनुभृतां निधनं च भवेत्तदा ध्रुवमहो यदि रक्षणकृद्विधिः ॥ २६० ॥

मंत्रास्त्रशास्त्रपरिबोधविधौ मनुष्योऽत्यर्थं भवेद्धि निपुणश्च विवेकशीलः । सेनापतिस्तु नृपतिस्त्वथवा पुरेशो ग्रामेश्वरो धरणिजे धिषणेन युक्ते ॥ १६ ॥ प्रपंचानृतद्यूतकर्मप्रियः स्यादनेकाङ्गनाभोगचित्तः सगर्वः । प्रसूतौ नरः सर्ववैरानुकर्ता यदा भूसुते दानवेज्येन युक्ते ॥ १७ ॥ शस्त्रास्त्रवित्समरकर्मरतो नितान्तं स्तेयानृतप्रियकरः पुरुषोऽल्पवित्तः । सौजन्यताविरहितः खलु सौख्यहीनः स्याद्भूसुतेऽर्कतनयेन युतेऽतिनिन्द्यः ॥ १८ ॥ संगीतज्ञो नीतिनाथो विनीतः सौख्याधिक्यः सद्गुणैः स्यात्प्रपूर्णः । धीरः सौगंधिप्रियः स्यादुदारः सूतौ जीवे सौम्ययुक्ते मनुष्य ॥ १९ ॥ सद्वाग्विलासो गुणवान् विवेकी सदा सहर्षः स्वकुलाऽधिशाली । नरः सुवेषो बहुनायकः स्याच्छुक्रान्विते सोमसुते प्रसूतौ ॥ २० ॥ कलिप्रियश्चञ्चलचित्तवृत्तिः कलाकलापे कुशलो नरः स्यात् । भर्त्ता बहूनां परमः सुशीलः प्रसूतिकाले बुधमन्दयोगे ॥ २१ ॥ नित्य कांतावित्तमित्रात्मजाद्यैः सौख्यं मर्त्यो विद्यया पंडितः स्यात् । वादाधिक्यं पण्डितार्यैः करोति गीर्वाणेज्ये दानवेज्येन युक्ते ॥ २२ ॥ यशोऽधिकग्रामपुराधिनाथः स्त्रीसंश्रयप्राप्तमनोरथ स्यात् । शूरो धनाढ्यः कुशलः कलासु जीवे समन्दे मनुजः प्रसूतौ ॥ २३ ॥ सच्छिल्पलेख्यविधिजातकुतूहलाढ्य पापाणकर्मकुशलश्चलबुद्धियुक्त । स्याद्दारुदारणकरो मनुजः प्रसूतौ पूर्वामरज्यसहिते तरणेस्तनूजे ॥ २४ ॥

मंगल बृहस्पतिसे युक्त हो तो मंत्रविद्या, अस्त्रशास्त्रके बोधमें मनुष्य अत्यन्त निपुण होवे । तथा विवेकी, सेनापति, यद्वा राज्य अथवा नगरका स्वामी वा ग्रामका स्वामी ग्रहबलानुसार होवे ॥ १६ ॥ मंगल शुक्रयुत हो तो प्रपंच, झूठ, द्यूत कर्ममें प्रीति रखे, अनेक स्त्रियोंके भोगमें मन रहे, घमण्डी होवे और मनुष्य सबके साथ वैर करनेवाला होवे ॥ १७ ॥ मंगल शनियुक्त होवे तो अस्त्र शस्त्र जाननेवाला, युद्धकर्ममें तत्पर, सर्वदा चोरी, झूठको प्रिय माने । अल्प-

धनवान्, सुजनतासे रहित, सुखहीन और लोकमे अतिनिंद्य होवै ॥ १८ ॥ बुध बृहस्पति युक्त होवै तो सगीत जाने, नीतिका स्वामी होवै, नम्र, अधिक सुखी, उत्तम गुणोंसे पूर्ण, धीर, सुगंधि वस्तु प्रिय, उदार होवै ॥ १९ ॥ बुध शुक्रयुक्त होवै तो उत्तम वाणीके विलासवाला, गुणवान्, विवेकवाला, सर्वदा खुश, अपने कुलमे, श्रेष्ठ सुन्दर वेषवाला और बहुतोका स्वामी होवै ॥ २० ॥ शनियुत बुध होनेमे मनुष्य कलहको प्यारा माने, चित्तवृत्ति चञ्चल रहे, कलाओंके समूहमे चतुर, बहुतोका पालन करनेवाला तथा परम सुशील होवै ॥ २१ ॥ बृहस्पति शुक्रयुत हो तो मनुष्य सर्वदा स्त्री, धन, मित्र, पुत्रादियोंसे सुख पावै । विद्या करके पण्डित होवै, पंडितश्रेष्ठोंसे अत्यत शास्त्रार्थ करे ॥ २२ ॥ बृहस्पति शनियुक्त हो तो अधिक यशवाला, ग्राम नगरका स्वामी, स्त्रीके पक्षमें सन्देही, मनोरथ सिद्धिवाला, शूरमा, धनवान्, कला जाननेवाला होवै ॥ २३ ॥ शुक्र शनियुत होवै तो उत्तम शिल्प, लेख-विधिसे उत्पन्न खेलसे युत होवै । पत्थरके कामोंमे चतुर, चञ्चलबुद्धिसे युक्त तथा लकडी चीरनेवाला होवै ॥ २४ ॥ इति द्विग्रहयोगाः ॥

अथ त्रिग्रहयोगाः ।

सद्यंत्रपाषाणविधौ प्रवीणस्त्रपाकृपाभ्यां रहितश्च शूरः ।
एकत्रसंस्थैर्जनने मनुष्यो भवेदशीतद्युतिरक्तचन्द्रैः ॥ २५ ॥
सत्कार्यकृन्नरपतेश्च भवेन्महौजा वार्त्ताविधौ सकलशास्त्र-
कलासु दक्षः । प्रद्योतनामृतकरामृतरश्मिजानां चेन्मानवश्च
खलु संमिलने प्रसूतौ ॥२६॥ प्राज्ञो धूर्त्तश्चंचलः स्यात्प्रवीणः
सेवाभिज्ञस्त्वन्यदेशाभिगामी । ताराधीशादित्यवाचस्पतीनां
योगे नूनं सूतिकाले मनुष्यः ॥ २७ ॥ सद्धर्मकर्मण्यरुचिर्नरः
स्यात्परार्थहर्त्ता व्यसनानुरक्तः । सरोजिनीशोशनशीतभास-
श्चैकत्र भावे यदि संयुताः स्युः ॥ २८ ॥ मन्दोऽतिनिःस्वश्च
परेङ्गितज्ञो धातुक्रियायां निरतोऽतिधूर्त्तः । व्यर्थप्रयास-
प्रकरो नरः स्यादकर्क्षगाः सूर्यसुधांशुमन्दाः ॥ २९ ॥

त्रिग्रहयोग कहते है—यदि सू० च० म० एक स्थानमें हों तो मनुष्य उत्तम यंत्र पत्थरके काममें प्रवीण, लज्जा एवं दयासे रहित, शूरमा होवै ॥ २५ ॥ सू० च० बु० के योगमें राजाका उत्तम काम करनेवाला, बडा तेजस्वी, बातचीतमें और संपूर्ण शास्त्र तथा संपूर्ण कलाओंमें चतुर होवै ॥ २६ ॥ सू० च० बृ० में पंडित, धूर्त्त, चञ्चल, प्रवीण, सेवा जाननेवाला, परदेश जानेवाला होता है ॥ २७ ॥ सू० च० शु० में उत्तम धर्म कर्ममें अरुचि, पराया कार्यनाशक, व्यसनोंमें तत्पर रहै ॥ २८ ॥ सू० च० श० में सर्व अतिनिर्द्धन, पराये इसारे जाननेवाला, धातुक्रियामें तत्पर, धूर्त्त, व्यर्थ कष्ट करनेवाला मनुष्य होवै ॥ २९ ॥

लज्जात्मजार्थवनिताजनमित्रवर्गैस्त्यक्तो भवेज्जनुपि निष्ठुरचित्तवृत्तिः । ख्यातः ससाहसकमन्दविधौ प्रवीणो युक्तैर्दिनाऽधिपकुजेन्दुसुतैर्मनुष्यः ॥ ३० ॥ वक्ता धनाढ्यः सचिवो नृपाणां चमूपतिर्नीतिविधौ समर्थः । उदारहृत्सत्यवचा विलासी स्यान्मानवोऽर्कारसुरेज्ययुक्तैः ॥ ३१ ॥ भाग्यान्वितोऽतिधिषणः सधनो विनीतो वंशाधिकः सुचतुरो बहुजल्पकः स्यात् ॥ ३२ ॥ सच्छीलसद्गुणयुतो मनुजः प्रसूतौ चैकर्क्षगैस्तरणिभूसुतदानवेज्यैः । विवेकहीनः पितृबंधुवर्गधनैर्विहीनः कलहानुरक्तः॥ रोमाऽन्वितः स्यान्मनुजः प्रसूतौ चेदर्कवक्रार्कसुता हि योगे ॥ ३३ ॥

सू० म० बु० से मनुष्य लज्जा, पुत्र, धन, स्त्रीजन और मित्रवर्गमें रहित रहता है, चित्तकी वृत्ति कठोर, विख्यात, साहसी, मन्द कामोंमें प्रवीण होता है ॥ ३० ॥ सू० मं० बृ० से व्याख्याता, धनवान्, राजाओंका मंत्री, सेनापति, न्याय करनेमें समर्थ, उदार मन, सत्यवादी और विलासवान् होवै॥ ३१ ॥ सू० मं० शु० से भाग्ययुक्त, अतिबुद्धिमान, धनवान्, नम्र, अपने वंशमें अधिक चतुर, बहुत बोलनेवाला तथा मनुष्य उत्तम स्वभाव, उत्तम गुणयुक्त होता है ॥ ३२ ॥ सू० म० श० से विवेकरहित, पिता बन्धुवर्ग तथा धनसे हीन, कलहमें तत्पर, बहुत रोमवाला होवै ॥ ३३ ॥

दृग्रोगयुक् शास्त्रकलाकलापे विचक्षणः स्यान्मनुजः सुशीलः। सुसंग्रहार्थः प्रबलः प्रसूतौ योगे रविज्ञामरपूजितानाम् ॥ ३४ ॥ कांतानिमित्तं परितप्तचित्तस्त्वनल्पजल्पश्च विदेशवासी। द्वेषी सतां निन्द्यमतिर्नरः स्याद्योगे विवस्वद्बुधभार्गवानाम् ॥ ३५ ॥ मन्दाकृतिश्चात्मजनैर्विहीनो लोकैर्महाद्वेषकरोऽतिदुष्टः। भवेन्नरो नीचजनानुयातः सूतौ रविज्ञार्कसुतैः समेतैः ॥ ३६ ॥

सू० बु० बृ० से नेत्ररोगयुक्त, शास्त्रकलाके विषयमे प्रवीण, सुशील, समस्त गृहधनमे अधिक होवै ॥ ३४ ॥ सू० बु० शु० से स्त्रीके निमित्त मन संतप्त रहै, बहुत बोलनेवाला, विदेशनिवासी, सज्जनोका द्वेषी, निन्द्य बुद्धि होवै ॥ ३५ ॥ सू० बु० श० से हीन आकृति, अपने मनुष्योंसे रहित, लोगोंके साथ बडा द्वेष करनेवाला अतिदुष्ट नीचजनसगतिवाला होवै ॥ ३६ ॥

परस्य कार्येऽप्यतिसादरो ना प्रगल्भवाक्यो द्रविणेन हीनः। भूपाश्रितः क्रूरतरः प्रसूतौ योगे रवीज्यासुरपूजितानाम् ॥ ३७ ॥ कान्तासु नित्यव्ययकृत्प्रगल्भः कलत्रपुत्रादिसुखैः समेतः। भूपप्रियः स्यात्पुरुषः प्रसूतौ योगे दिनेशेज्यशनैश्चराणाम् ॥ ३८ ॥ द्रविणकाव्यकथास्वजनोज्झितः कुचरिताभिरुचिस्त्वतिभीतियुक्। भवति कंडुरुजार्तियुतः सदा रविसितार्कसुतैः सहितैर्नरः ॥ ३९ ॥

र० बृ० शु० योगमे मनुष्य पराये कार्यमे श्रद्धालु, वाचाल, चतुर, धनहीन, राजाश्रयी, अति क्रूर होता है ॥ ३७ ॥ सू० बृ० श० के योगसे स्त्रियोमे नित्य धनव्यय करनेवाला, बोलनेमे चतुर, स्त्री पुत्रादि सुखयुक्त, राजाका प्रिय होता है ॥ ३८ ॥ र० शु० श० से धन, काव्य कथा और अपने मनुष्योंसे त्यक्त रहै, दुष्ट चरित्रोमे रुचि रहै, अति भयवान्, सर्वदा खुजलीके रोगोसे पीडित रहै ॥ ३९ ॥

दीनोऽत्यंतं स्वीयवर्गापमानो नूनं मर्त्यो वित्तधान्येन हीनः ।
स्याद्रुत्पत्तौ हीनलोकानुयातो योगे दोषाधीशभौमेन्दुजानाम्
॥ ४० ॥ स्त्रीयुतोऽमलवपुः परिहर्त्ता कोपसंयुतनरो व्रणयुक्तः
चेत्प्रसूतिसमये मिलिताः स्युः शीतभानुरुधिरामरपूज्याः
॥ ४१ ॥ दुःशीलास्त्रीनायकश्चचलो ना दुःशीलः स्यात्त-
त्सुतः शीलयुक्तः । मर्त्यो नूनं चैकभावे यदि स्युः सूतौ
ताराधीशभौमासुरज्या ॥४२॥ मृतिप्रदः शैशवके जनन्याः
सदा मनुष्यः कलहाभितप्तः । स्याद्गर्हितश्चन्द्रकुजार्कपुत्रा
प्रसूतिकाले मिलिता यदि स्युः ॥ ४३ ॥

चं० मं० बु० के योगसे मनुष्य अत्यत दीन, अपने मनुष्योंमें अपमानित, अन्न धनमें हीन, हीन मनुष्योंके अनुकूल रहनेवाला होता है ॥४०॥ चं० मं० बृ० से स्त्रीसहित, निर्मल देह, दूसरेके शुभ कार्यको हरण करनेवाला, कोपसंयुक्त और घावसे चिह्नित होवे ॥ ४१ ॥ चं० मं० शु० से दुष्टस्वभावकी स्त्रियोंके विषे ( नायक ) अफसर, चचल, दुष्टस्वभाव होवे, उसका पुत्र सुशील होवे ॥ ४२ ॥ चं० मं० श० से बाल्यावस्थामें माताको मृत्यु देवै, सर्वदा कलहसे सतप्त रहे, निंद्य होवे ॥ ४३ ॥

धीमान्महौजा बहुभाग्ययुक्तः सुवृत्तविद्योऽतिविचित्रमित्रः ।
विख्यातकीर्तिश्च भवेन्मनुष्यश्चैकत्रसंस्थैः शशिसौम्यजीवैः
॥४४॥ वृद्धस्पर्द्धायुक् सुविद्याप्रवीणो मर्त्यो नूनं नीचवृत्त्यर्थ-
लुब्धः । चेदेकत्रस्थानसंस्थाः प्रसूतौ ताराधीशज्ञासुराचार्य-
संज्ञाः ॥ ४५ ॥ ख्यातो विनीतोऽभिमतो नृपाणां नरः पुर-
ग्रामकृताधिकारः । कलाकलापामलबुद्धिशाली चंद्रज्ञमन्दाः
सहिता यदा स्युः ॥ ४६ ॥

चं० बु० बृ० एकत्र होनेमें मनुष्य बुद्धिमान्, बडा तेजस्वी, बडे ऐश्वर्यवाला, उत्तम विद्यावाला, बहुत एव अनेक प्रकारके मित्रोंवाला विख्यातकीर्ति होवे ॥ ४४ ॥ चं० बु० शु० में मनुष्य बडी स्पर्धासे युक्त, दूसरेका डाह माने, उत्तम विद्यायुक्त, नीचवृत्ति, अति धनलोभी होवे ॥ ४५ ॥

च० बु० श० से मनुष्य ख्यात, नम्र, राजाके मनोनुकूल, नगर, ग्रामके अधिकारी कलाविद्या जाननेवाला बुद्धिमान् होता है ॥ ४६ ॥

भाग्याधिकः सद्गुणकीर्तियुक्तः सद्बुद्धिवृद्ध्या सहितो नरः स्यात् ।
प्रसूतिकाले हिमरश्मिजीवपूर्वामरेज्याः सहिता यदा स्युः ॥ ४७ ॥
सन्मन्त्रशास्त्राधिकृतः सुवेषो भूपप्रियोऽत्यन्तविचक्षणश्च ।
भवेन्महौजा मनुजः प्रसूतौ योगे निशीशेज्यशनैश्चराणाम् ॥ ४८ ॥
अभिमतोत्तमपुस्तकवीक्षणे सुलिखनेऽपि च पुण्यपरायणः ।
श्रुतिविदां प्रवरश्च पुरोधसः शशिसितार्कभुवां मिलने नरः ॥ ४९ ॥

च० बृ०शु०से अधिक ऐश्वर्यवाला, शुभ गुण, कीर्तिमान्, उत्तम बुद्धि-वृद्धि करिके युक्त मनुष्य होवै ॥ ४७ ॥ च०बृ० श०से मनुष्य उत्तम मंत्र उत्तम शास्त्रोका जाननेवाला, सुदर वेष, राजप्रिय, अत्यंत चतुर और बडा तेजस्वी होवे ॥ ४८ ॥ च० शु० श०से उत्तम ग्रन्थ देखनेमे श्रद्धालु, उत्तम लेखमेभी रुचिवाला, पुण्यमे तत्पर, वेदपाठियोमे श्रेष्ठ और पुरोहित होवै४९

निजकुले नृपतिर्मनुजो भवेद्वरकवित्वकगीतकलादरः ।
अतिपरार्थकसाधनमानसः कुजबुधांगिरसां जनने युतौ ॥ ५० ॥
वाचालः स्याच्चंचलः क्षीणदेहो नित्योत्साही मानवो वित्तयुक्तः ।
धृष्टोऽत्यंतं तारकेशावनीजदैत्येज्यानां संभवः संयुतेश्चेत् ॥ ५१ ॥
भयान्वितः क्षीणवपुर्वनेच्छुः प्रेष्यः प्रवासी कुविलोचनश्च ।
न स्यात्सहिष्णुर्बहुजल्पको ना योगे कुजज्ञार्कभुवां प्रसूतौ ॥ ५२ ॥

म० बु० बृ० से मनुष्य अपने कुलमे श्रेष्ठ, श्रेष्ठ कविता, गीत कलाका आदर करनेवाला, परार्थ साधनमे अत्यंत मन रहै ॥ ५० ॥ मं०बु०शु०से मनुष्य वाचाल (बहुत बोलनेवाला), चपल, दुबला शरीर, सर्वदा उत्साही, धनवान् और अत्यंत धृष्ट होता है ॥ ५१ ॥ मं० बु० श० से मनुष्य भय-युक्त, क्षीण शरीर, वनकी इच्छा रखनेवाला, दूत, परदेशवासी, कुनेत्र, सहनशील नहीं, बहुत बकनेवाला होवै ॥ ५२ ॥

कलत्रपुत्रादिसुखैः समेतो भूपालमान्यः सुजनानुयातः ।
भवेन्मनुष्योऽवनिजामरेज्यपूर्वामरेज्यैः सहितैः प्रसूतौ ॥५३॥
भूपातमानः कृपया विहीनः कृशः कुवृत्तो गतमित्रसौख्यः ।
भवेन्नरश्चैकगृह प्रयातैः क्षोणीतनूजाङ्गिरसार्कपुत्रैः ॥ ५४ ॥
विदेशवासी जननी त्वनार्या कुरङ्गनेत्रापहतिः सुखांतः ।
प्रसूतिकाले यदि संयुताः स्युर्माहेयदैत्याचितभानुपुत्राः ॥ ५५ ॥
मं० बृ० शु० में स्त्रीपुत्रादियोंके सुखयुक्त, राजमान्य, सज्जन सगी, मनुष्य होता है ॥ ५३ ॥ मं० बृ० श० में मनुष्य राजासे मान प्राप्त, दयारहित, दुबला शरीर, दुष्ट वृत्तिवाला, मित्रसुखरहित होता है ॥ ५४ । मं० शु०श० में मनुष्य विदेशवासी होवे, उसकी माता असाध्य होवे, सुंदर स्त्रीके कारण मानहानि आदिसे सुखनाश होय ॥ ५५ ॥

सत्यान्वितः स्याद्बहुगीतकीर्तिर्भूपानुकंपी विजितारिपक्षः ।
प्रसन्नमूर्तिर्बुधजीवशुक्रैरेकर्क्षसंस्थैर्जनने नरः स्यात् ॥ ५६ ॥
संस्थानसद्वैभवसौख्ययुक्तो नरः सुवृत्तो धृतिसंयुतः स्यात् ।
अनल्पभाषी बुधजीवमन्दाः प्रसूतिकाले यदि संयुताः स्युः ॥ ५७ ॥
असत्यभाषी बहुजल्पको ना धूर्त्तः सदाचारविवर्जितः स्यात् ।
दूरप्रयाणानुरतः कलाज्ञो देवेज्यशुक्रार्कभुवां प्रसूतौ ॥ ५८ ॥
यदपि नीचकुलोद्भवमानवो विशदकीर्तियुतः पृथिवीपतिः ।
अमलवृत्तियुतो जनने भवेद्धिषणभार्गवभानुभुवा युतौ ॥ ५९ ॥
बु० बृ० शु० एक राशिमें हो तो मनुष्य सत्यवादी होवे, उसकी कीर्ति बहुधा गायी जावे, राजाकी कृपा रहे, शत्रुसे विजयी रहे, मुख प्रसन्न र ॥ ५६ ॥ बु० बृ० श० में मनुष्य स्थान ऐश्वर्यसे उत्पन्न सुखसे युक्त रहे उत्तम चरित्रवाला होवे, धारणायुक्त, बहुत बोलनेवाला होवे ॥ ५७ बृ० शु० श०में झूठ बोलनेवाला, बहुत बकनेवाला, धूर्त्त, सदाचार रहि दूर गमनमें तत्पर और कला जाननेवाला होवे ॥ ५८ ॥ बृ० शु० श० योगमें मनुष्य यद्यपि नीचकुलोत्पन्न हो तो भी विशालकीर्तियुक्त रा निर्मल वृत्तिवाला होवे ॥ ५९ ॥ इति त्रिग्रहयोगाः ॥

पापखेटसहिते कलानिधौ कीर्तयंति जननीविनाशनम् ।
तादृशेऽम्बरमणौ जनकस्य मिश्रिते च खलु मिश्रितं फलम् ॥ ६० ॥
सद्युते कुमुदिनीपतौ जनौ भूयशोऽर्थवरकीर्तिसंयुतम् ।
गौरवेण नृपतेर्वरेण्यकं मानवं प्रकुरुते कुलोत्तमम् ॥ ६१ ॥

चंद्रमा पापयुत हो तो माताका और ऐसा सूर्य होवै तो पिताका नाश करते, है मिश्रितमे मिश्रित फल होता है ॥ ६० ॥ चन्द्रमा जन्ममे शुभयुत होवे तो मनुष्यको भूमि, यश, धन, श्रेष्ठ कीर्त्तिसे युक्त तथा गौरवसे श्रेष्ठ और अपने कुलमे उत्तम करता है ॥ ६१ ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुञ्जराजोदिते च ।
होरासारे शंभुहोराप्रकाशेऽध्यायः पूर्णः सप्तवर्गादिकानाम् ॥ ६२ ॥

इति श्रीपुजराजाविरचिते शम्भुहोराप्रकाशे सप्तवर्गफलाद्यध्यायः षोडशः ॥ १६ ॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है ॥ ६२ ॥

इति श्रीशम्भुहोराप्रकाशे माहीवरीभाषाटीकाया सप्तवर्गफलाद्यध्याय षोडश ॥ १६ ॥

---

## अथ राजयोगाध्यायः १७ ।

भाग्यादिभावजफलं प्रतिपादितं यद्भाग्यं भवेत्तदखिलं खलु राजयोगैः । तान्विस्तरेण च वदाम्यथ राजयोगांस्तैः सार्थकं हि जननस्य यतो नराणाम् ॥ १ ॥

जो भाग्यभावादि फल कहे है वह समस्त ऐश्वर्य निश्चय राजयोगोसे होता है, उन योगोके ही कारण जन्मकी सफलता है, इसलिये उन राजयोगोको विस्तारसे कहताहू ॥ १ ॥

निजोच्चस्थिताः खेचराः पंच यस्य प्रसूतौ भवेत्सार्वभौमः स मर्त्यः । त्रयः स्वीयतुंगादियाताः स राजा नृपालात्मजोऽन्यस्य पुत्रोऽत्र मंत्री ॥ २ ॥ चतुःखेचरा यस्य तुंगोपयाता महानिम्नगातारणे स्युर्बलानाम् । महासेतुबंधाश्च दंतावलानां तथा कीर्तिबंधा धरित्रीतले ते ॥ ३ ॥ तुंगस्थैरिनभौमजीवशनिभिर्यद्वा त्रिभिर्विक्रमात्तेषामन्यतमोदयेऽवनिभुजां योगाः

**स्मृताः षोडश । तन्मध्येऽपि निजोच्चगे ग्रहयुगे चैकग्रहे शीतगौ स्वर्क्षे तुंगगतेऽथवैकखचरं मूर्त्तौ परे षोडश ॥ ४ ॥**

जिसके जन्ममें पांच ग्रह उच्चके हो वह मनुष्य ( चक्रवर्त्ती ) बादशाह होता है, जिसके तीन ग्रह अपने उच्च आदियोंमें हों वह राजपुत्र हो तो राजा अन्यका पुत्र मंत्री होता है ॥ २ ॥ जिसके चार ग्रह उच्चके हों उसकी सेनायें महान् महानदियोंके पार विजय करनेको समर्थ होवें । सेनाके हाथियोंसे उनपर बडे पुल बंधें तथा सारी पृथ्वीमें उसकी कीर्त्तिके बांध बंधे ॥ ३ ॥ केन्द्रों १ । ४ । ७ । १० में उच्चके सूर्य, मंगल, गुरु, शनि हों या तीन ग्रह उच्चके हों तो इन्हीं लग्नोंसे कोई लग्न हो तो हेरफेरके १६ विकल्प राजयोगोंके होते है उन्हीं विकल्पोंमें २ ग्रह उच्चके और चन्द्रमा स्वगृही हो अथवा एक ग्रह उच्चका चन्द्रमा स्वगृही हो अथवा ३ ग्रह उच्चके और चन्द्रमा स्वगृही हो तो येभी १६ भेद राजयोगके होते है । उदाहरण—कुण्डलियोंमें है ॥ ४ ॥

राजयोगविकल्पानामुदाहरणम् ।

१


















७




८




९




१०




११




१२




१३




१४




१५




१६




१७




१८



३१




३२




वर्गोत्तमे हिमकरे तनुगे च यद्वा चन्द्रोज्झितैश्च चतुरादिभिरीक्षिते च। द्वाविंशतिः क्षितिभुजामपि संभवन्ति योगाः सदा जलधिसीमवती मही च ॥ ५ ॥ प्राग्देवेज्य कुंभभूर्दक्षिणे च शुक्रः पश्चात्सौम्यसंस्थो वसिष्ठः। पुंसो नूनं सूतिकाले तु यस्य नाथः स स्यादासमुद्रं धारित्र्याः ॥ ६ ॥ स्वोच्चे बुधे तनुगतेऽर्कसुते सभौमे नक्रे गुरौ धनुषि चन्द्रसुतेन युक्ते। स्यात्तस्य धात्र्यधिपतेर्नियतं प्रयाणे सेनाश्वकुंजरचयैर्दलिताचलाः स्युः ॥ ७ ॥

चन्द्रमा अथवा लग्न वर्गोत्तममें हो उसे चार आदि ग्रह चन्द्रवर्जित देखे तो इस योगमें ग्रह दृष्टिके विकल्पसे २२ भेद होते हैं, इन योगोंके किसी भेदमें जन्म हो तो समुद्र पर्यंतका राजा होता है ॥ ५ ॥ जिसके जन्ममें बृहस्पति पूर्वमें, अगस्ति दक्षिणमें, शुक्र पश्चिममें और वशिष्ठ उत्तरमें हो तो वह समुद्रांत पृथ्वीका राजा होता है ॥ ६ ॥ उच्चका बुध लग्नमें, शनि, मंगल सहित मकरमें, बृहस्पति बुध धनमें हो उस राजाके गमनमें सेना घोडे हाथियोंके समूहसे पर्वत चूर्ण होजावें ॥ ७ ॥

कंठीरवस्थे दिवसाधिनाथे मृगेऽवनीजेऽर्कसुते घटस्थे। पाथोनलग्ने तुहिनांशुयुक्ते पृथ्वीपतेर्जन्म महौजसः स्यात् ॥ ८ ॥ क्षोणीपुत्रे मेषगे मूर्तिसंस्थे वागीशे चेल्लग्नसंस्थे निजोच्चे। स्यातां भूपौ चापि योगद्वयेऽस्मिन् श्रेष्ठौ वीर्याढ्यौ जितारातिपक्षौ ॥ ९ ॥

सूर्य सिंहका, मंगल मकरका, शनि कुंभका, कन्या लग्न हो और उसीमें चंद्रमा होवे तो बडे तेजस्वी राजाका जन्म होवे ॥ ८ ॥ मंगल मेषका, बृहस्पति उच्चराशिका लग्नमें हो तो ये दो राजयोग हैं, इनमें शत्रु जीतनेवाले बलवान् राजा होते हैं ॥ ९ ॥

गीर्वाणेज्यः स्वोच्चगो लग्नवर्त्ती मेषे हेलिर्मंदशुक्रेन्दुपुत्राः । लाभर्क्षस्था भूमिपस्तं गृणंति वीर्योपेतं भूषणं भूतलस्य ॥ १० ॥ आकोकेरस्थः शनिर्लग्नवर्ती मित्रेणाढ्याः सिंहयुग्माजजूकाः । कर्किस्ते वै नायकं तं प्रकुर्युर्यद्वाऽम्भोधिप्रांतभूमीतलस्य ॥ ११ ॥ द्वन्द्वे सितेऽब्जधिषणौ शफरे कुजार्की नक्रे विलग्नभगते शशिजे स्वतुंगे । सूतौ भवेत्स हि महानचलाधिनाथो मत्तेभशत्रुदलने मृगराजतुल्यः ॥ १२॥ सिंहांगेऽर्कश्छागसंस्थो हिमांशुर्नक्रे वक्रः कार्मुकस्थः सुरेज्यः । सौरिः कुंभे सूतिकाले यदि स्यान्मर्त्योऽत्यर्थं वापि राजाधिराजः ॥ १३ ॥

बृहस्पति उच्चका लग्नमें, सूर्य मेषमें, शनि, शुक्र, बुध लाभभावमें हो तो इस योगवालेको बलवान् राजा पृथ्वीका भूषण करते है ॥ १० ॥ मकरका शनि लग्नमें और ५ । ३ । १ । ७ । ४ । मेंसे किसीमें सूर्य हो तो समुद्रांत पृथ्वीका पति करते है ॥ ११ ॥ मिथुनमें शुक्र, मीनमें चन्द्रमा, गुरु मकरमें, मंगल, शनि, बुध लग्नमें उच्चका हो तो वह बडे पर्वतोंका राजा शत्रुरूपी उन्मत्त हाथियोंके दलनमें सिंहके समान होवे ॥ १२ ॥ सिंहलग्नमें सूर्य, मेषमें चंद्रमा, मकरमें मंगल, धनमें गुरु, कुम्भमें शनि जन्म समयमें हो तो मनुष्य अत्यर्थ राजाधिराज होवै ॥ १३ ॥

मेषे सौम्यो मूर्तिसंस्थः प्रसूतौ वागीशश्चेन्मन्मथस्थः कलावान् । पातालस्थो व्योमगो दानवेज्यः पृथ्वीनाथः स्याद्दिगंतप्रकीर्तिः ॥ १४ ॥ वाचस्पतिः कर्कटगः प्रसूतौ खास्तांबुसंस्थाः कुजशुक्रमंदाः । तद्यानकाले जलधेर्जलानि भेरीनिनादोल्ललनं प्रयांति ॥ १५ ॥

मेषका बुध लग्नमे, सप्तम गुरु, चतुर्थ चद्रमा, दशम शुक्र, जन्ममे हो तो दिगंतकीर्तिवाला राजा होवै ॥ १४ ॥ बृहस्पति कर्कका, १० । ७ । ४ मे क्रमसे मगल, शुक्र, शनि जन्ममे हो तो उस राजाके चलनेमे भेरि (तुरही) योंके शब्दोसे समुद्रके जल उछलते है ॥ १५ ॥

सूतौ खेटश्चेत्स्फुरद्रश्मिजालः स्वर्क्षे मित्रर्क्षे च षड्वर्गशुद्धः । संस्थः सो वै कंटके वा त्रिकोणे कुर्यान्नूनं मानवं सार्वभौमम् ॥ १६ ॥ षड्वर्गशुद्धमपि खेचरयुग्मकं चेद्यस्य प्रसूतिसमये च यथोक्तरीत्या । तस्याधिपत्यमतुलं खलु किन्नरेषु द्वीपांतरे भवति चात्र न किं धरायाम् ॥ १७॥ तुंगस्त्रिकोणभवनाद्यधिकारहीनैः षड्वर्गशुद्धिसहितैस्त्रिभिरेव मंत्री । राजा भवेच्छ्रुतिमितैः खलु सार्वभौमः पंचादिभिश्च सहसा गुरुणैककेन ॥ १८ ॥

एकभी ग्रह जो अस्तगत न हो स्वराशि, मित्रराशिमेभी षड्वर्गशुद्ध हो और केन्द्र वा त्रिकोणमे हो तो वही एकग्रह मनुष्यको चक्रवर्त्ती करदेता है ॥ १६ ॥ यदि षड्वर्गशुद्ध दो ग्रह उक्त प्रकार गुणोसे युक्त हों तो उस मनुष्यका राज्य किन्नरोमे, द्वीपांतरोमे भी होता है, पृथ्वीमे होना तो क्या बडी बात है ॥ १७ ॥ उच्च त्रिकोणादि अधिकार रहितभी तीन ग्रह षड्वर्गशुद्ध हों तो मनुष्य मत्री होता है, चार ग्रह हो तो राजा, पांच आदि हो तो निश्चय चक्रवर्त्ती होता है और एक गुरुही षड्वर्गशुद्ध होवै तो सहसा चक्रवर्त्ती करता है ॥ १८ ॥

वृषे शीतगुर्लग्नसंस्थः प्रसूतौ खतुर्यास्तगा मंदसूर्यामरेज्याः । भवंतीह तद्दण्डयात्रा सुधूल्यंधकारा दिने स्यात्तमिस्राप्रवेशम् ॥ १९ ॥ यस्येन्दुशुक्र[illegible] पगता भवंति । लग्ने शनिर्नक्रगतोऽत्र नूनमेकातपत्रः स भुनक्ति भूमिम् ॥ २० ॥

जन्मकालमे वृषका चद्रमा लग्नमे, १० । ४ । ७ भावोमे क्रमसे शनि, सूर्य, गुरु होवै तो उस राजाकी सेनाके चलनेके गर्दसे दिनमेभी रात्रिकेसे

अधकार प्रतीत होवे ॥ १९ ॥ जिसके चन्द्रमा, शुक्र, बुध, गुरु ३ । ६ । ११ । १२ भावोंमें हो और लग्नमें मकरका शनि हो तो वह मनुष्य सारी पृथ्वीका एक छत्र राज्य भोगता है ॥ २० ॥

स्वतुंगस्थितौ सौम्यशुक्रौ विलग्ने मृगे भूमिजश्चापगौ जीवचंद्रौ । प्रसूतौ मनुष्यौ च तौ भूमिपालौ भवेतां तथाऽऽस्यण्डस्तौ भूतलस्थौ ॥ २१ ॥ कुलीरगौ चन्द्ररवी सुरज्य सपन्नगश्चंद्रसुतः स्वतुंगे । कश्चिद्बली मूर्त्तिगतः स राजा राजाधिराजाह्वयताभियुक्तः ॥ २२ ॥ केन्द्रगः सुरगुरुर्निजोच्चभे दानवेन्द्रसचिवो नभस्थितः । संभवेदपि सुमुद्रिका चतुस्तोयराश्यवधिगामिनी भवेत् ॥ २३ ॥

अपने उच्चराशिके शुक्र वा बुध लग्नमें, मकरमें मगल, धनमें गुरु, चंद्रमा जिसके जन्ममें हो वह मनुष्य पृथ्वीमें राजा होकर सूर्यके समान तपते है ॥ २१ ॥ कर्कटमें चद्रमा सूर्य, छठा गुरु, उच्चका बुध हो तथा कोई बलवान् ग्रह लग्नमें हो तो वह राजा राजाधिराज नामसे युक्त होवे ॥ २२ ॥ अपने उच्चका गुरु केन्द्रमें, शुक्र दशममें जिसके जन्ममें हो उसकी मोहर ( छाप ) चारों समुद्र पर्यंत जानेवाली होवे ॥ २३ ॥

मेषेऽर्कज्यौ खे कुजो ज्ञोशनाब्जाः पुण्ये सूतौ यस्य चेत्सोऽवनीशः । तद्याने स्याद्दिग्जयो व्याकुला भूः सैन्यैश्चिन्तोद्वेगिताः शत्रवः स्युः ॥ २४ ॥ नीचारिभागरहिताः स्फुरदंशुजालाः सूतौ खगा बलयुताः खलु त्यक्तवैराः । शुक्रे वृषे समुदितः स च मातृचक्रे जीवो भवेदमरतुल्यपराक्रमश्च ॥ २५ ॥

मेषमें सूर्य, गुरु, दशम मगल, नवम बुध, शुक्र, चद्रमा जिसके जन्ममें हो वह राजा होवे, उसके गमनमे दिग्विजय होवे और सेनाके चलनेमें भूमि व्याकुल और शत्रु चिन्ता एव उद्वेग युक्त होवे ॥ २४ ॥ जन्ममें ग्रह नीच, शत्रु भागमे न हो, अस्तगत न हो, बलवान् हो, शत्रु युक्त न हो, शुक्र वृषमें उदयी हो तो वह मनुष्य ससारचक्रमे देवतुल्य पराक्रमी होवे ॥ २५ ॥

मार्तण्डश्चेन्मेषगो लग्नवर्त्ती कर्के जीवे जूकगौ चंद्रमंदौ ।
सूतौ धात्रीपालको भूपमालाभिर्वै मर्त्त्यः पालिताज्ञो भवेत्सः॥२६
मीनगः कुमुदिनीदयितश्चेत्पूर्ण एव निखिलेक्षितयुक्तः ।
सार्वभौममवनीश्वरैः करोतीद्रतुल्यसुपराक्रमं जनौ ॥ २७ ॥

मेषका सूर्य लग्नमे, बृहस्पति कर्कमे, तुलामे शनि, चन्द्रमा जन्ममे हो तो जिसकी आज्ञाको बहुत राजा पालन करे ऐसा राजा होवै ॥ २६ ॥ यदि चन्द्रमा मीनका, सर्वग्रह दृष्ट तथा पूर्णमण्डल हो तो चक्रवर्त्ती राजा होकर मनुष्योमे इन्द्रतुल्य पराक्रम करता है ॥ २७ ॥

सत्त्वोपेत सौम्यखेटः प्रपश्येत्पूर्ण चंद्रं सूतिकाले नरस्य ।
भूपाल स्यान्निर्जितारातिपक्षः शूरोऽत्यर्थं सर्वसेनाप्रपूर्णः ॥ २८ ॥
नास्तं याताः पुत्रगा ज्ञेज्यशुक्राः पुण्ये मंदः शत्रुसंस्थः खरांशुः ।
यात्राकाले तस्य सेनातिचाराद्बस्राधीशश्चापि धूलीकृतास्तः ॥२९॥
कन्यालग्ने ज्ञाऽर्कवक्रौ तृतीयेऽम्बुस्थः शुक्रोऽस्ते गुरुः सूर्यजोऽरौ ।
सूतो योगेऽस्मिन्महाभूमिपालो वैकल्याः स्युः शत्रवस्तद्रणाग्रे॥३०॥
मीनोदये चेद्भृगुजेन्द्रमन्त्री कार्किस्थितौ जीवनिशीथिनीशौ ।
मेषेऽर्कवक्रौ धरणीपतिः स्यादाखण्डलेनापि तुलां प्रयाति ॥ ३१ ॥
इत्युक्तैः स्यान्नीचवंशोद्भवोऽपि योगैर्भूपः किं पुनर्भूपसूनुः ।
भूपाज्जातो वक्ष्यमाणैश्च योगैर्भूपालः स्यात्तत्समोऽन्यस्य पुत्रः॥३२

बलवान शुभग्रह पूर्णचन्द्रमाको जिस मनुष्यके जन्मकालमे देखे वह राजा होवे, शत्रु जीते है जिसने ऐसा समस्त सेनासे पूर्ण अत्यत शूर होवे ॥ २८ ॥ पचम भावमे बुध, गुरु, शुक्र उदयी हो, नवम शनि, छठा सूर्य हो तो उस राजाके चलनेमे सेनाके दौडनेसे सूर्य धूल गर्दसे अस्त हो जावे ॥ २९ ॥ कन्यालग्नमे बुध, सूर्य, मगल तीसरे, शुक्र चौथा, सप्तम गुरु, शनि छठा जिसके जन्ममे हो वह महाराजा होवै, उसके रणके आगे शत्रु विकल होवै ॥ ३० ॥ मीनलग्नमे शुक्र, कर्कमे गुरु चद्रमा, मेषमे सूर्य मंगल हो तो राजा सूर्यकी तुलनाको प्राप्त होवै ॥ ३१ ॥ इतने जो राज-योग कहे है इनमे नीचकुलोत्पन्नभी मनुष्य राजा होता है, राजपुत्रका तो

कहनाही क्या है । अब आगे जिन योगोंसे राजपुत्रही राजा होता है अन्य राजतुल्य होते हैं उन योगोंको कहते है ॥ ३२ ॥

छायापुत्रो नक्रलग्नेऽपयातश्चेदुत्पत्तौ मन्मथे पुष्पवंतौ । लाभे वक्रो भार्गवश्चाष्टमस्थो भूपालः स्याद्भूपवंशप्रसूतः ॥ ३३ ॥ पातालस्थौ जीवशुक्रौ प्रसूतौ भूमीपालो निर्भरं स्यात्समर्थः । वागीशश्चेत्कर्कटस्थः प्रकुर्यान्नूनं मर्त्यं वापि काश्मीरनाथम् ॥ ३४ ॥ निरीक्ष्यमाणो धिषणोशनोभ्यां स्वोच्चस्थितोऽब्जो नृपतिं करोति । खेटो यदेकः परिसूतिकाले वा पंचमांशे कुरुते नृपालम् ॥ ३५ ॥ विलोकयंश्चन्द्रसुतं सुरेज्यो विचित्रसंपन्नृपतिं करोति । संपूर्णचन्द्रं प्रविलोकयंतश्शुक्रेज्यसौम्या जनयंति भूपम् ॥ ३६ ॥ अधिसुहृद्धवग क्षणदाधिपो नरपतिं प्रकरोति सितेक्षितः । अधिसुहृन्निजभागगतोऽथवा धिषणवीक्षणतः कुरुते नृपम् ॥ ३७ ॥ घस्राधीशे चाधिमित्रांशकस्थे दृष्टे सम्यग् यामिनीनायकेन । मर्त्याधीशस्तस्कराणां समूहे सच्छीलो वै निर्भरं स्यादुदारः ॥ ३८ ॥ सौम्यः स्वोच्चस्थः ससोमः प्रसूतौ कुर्याद्भूप मागधेशं सवीर्यम् । वीर्योपेतः शर्वरीनायकश्चेद्भूमीपालं वापि सन्मन्दिरस्थः ॥ ३९ ॥ जनुर्लग्नपो जन्मराशीश्वरो वा बली कंटके नीचवंशेऽपि भूपम् । प्रकुर्यादुदार नितांतं पवित्र किमत्रैव चित्रं महीपालपुत्रम् ॥ ४० ॥

शनि मकरलग्नमे, सप्तम सूर्य चंद्रमा, लाभभावमे मंगल, अष्टम शुक्र जन्ममे हो तो राजवंशोत्पन्न मनुष्य राजा होवे ॥ ३३ ॥ चतुर्थ बृहस्पति, शुक्र जन्ममे हो तो सामर्थ्यवान् राजा होवे । बृहस्पति कर्कका भी होवे तो मनुष्य निश्चय काश्मीरदेशका राजा होवे ॥ ३४ ॥ उच्चराशिका चंद्रमा गुरु शुक्रसे दृष्ट हो तो मनुष्यको राजा बनाता है अथवा जन्ममे कोई एक ग्रह पंचवर्गशुद्ध हो तो वह भी नीचको राजा बनाता है ॥ ३५ ॥ बुधको गुरु देखे तो अनेक संपत्तिवाला राजा करे । वृषमे पूर्ण चन्द्रमाको शुक्र, गुरु, बुध देखे तो राजा करता है ॥ ३६ ॥

चन्द्रमा अधिमित्रके स्थानमे शुक्रसे दृष्ट हो तो राजा बनाता है अथवा अधिमित्रांशकी यद्वा स्वांशकी हो उसे गुरु देखे तो राजा करता है ॥ ३७॥ सूर्य अधिमित्रांशकमे चन्द्रमासे दृष्ट हो तो चोरोंके समूहमे राजा होवै और उत्तम चरित तथा उदार होवै ॥ ३८ ॥ जन्ममे उच्चका बुध चन्द्रसहित हो तो मगधदेशका बलवान् राजा करना है, बलवान् चन्द्रमा शुभराशिमे हो तोभी राजा बनाता है ॥ ३९ ॥ जन्म लग्नेश वा जन्म राशीश बलवान् केन्द्रगत होवै तो नीचवंशोत्पन्न मनुष्यकोभी सर्वदा उदार पवित्र राजा बनाता है, राजपुत्रका ऐसा हो तो क्या आश्चर्य है ॥ ४० ॥

अविस्थितस्तिग्मरुचिः ससोमो यस्य प्रसूतौ स तु भूपतिः स्यात् । कर्णाटकद्राविडकेरलांध्रदेशाधिपानामनुकूलवर्त्ती ॥ ४१ ॥ स्वोच्चस्वमंदिरगतौ भृगुजामरेज्यौ केंद्रत्रिकोणभवनेषु गतौ भवेताम् । यस्य प्रसूतिसमये कुरुते नृपालं भूपालसंभवमलं सचिवेन्द्रमन्यम् ॥ ४२ ॥ यस्य प्रसूतिसमये मदने धने च प्रांते विलग्नभवने यदि संति खेटाः । ते छत्रयोगमपि संजनयंत्यवश्यं प्राचीनपुण्यनिचयाभ्युदयो हि यस्य ॥ ४३ ॥ तनुस्थितः क्रूरखगः प्रसूतौ विलोकितो गीष्पतिना तु यस्य । कविः कुलीरे द्विजदेवभक्तः प्रासादवापीपुरकृन्नृपः स्यात् ॥ ४४ ॥ शस्तो यदेकः शुभदः स्वतुंगे केन्द्रेऽम्बुजेशो बलवान् प्रदृष्टः । देवार्चितेनात्मजसंस्थितेन चेन्मानवो वै मनुजाधिपः स्यात् ॥ ४५ ॥ नक्रराशिमपहाय लग्नगो यस्य जन्मसमये सुरार्चितः । चेत्करोति मनुजं नराधिपं मत्तकुंजरगणैः समन्वितम् ॥ ४६ ॥

जिसके जन्ममे सूर्य चन्द्रमा सहित मेषका हो वह राजा कर्णाटक, द्राविड, केरल और अन्ध्रदेशवालोंके अनुकूलवर्त्ती होता है ॥ ४१ ॥ अपने उच्च वा स्वगृहगत गुरु शुक्र केन्द्र त्रिकोणमे जिसके जन्ममे हो वह राजपुत्र मंत्रिश्रेष्ठोंके माननीय राजा, अन्य वर्ण मत्री होता है ॥ ४२ ॥ जिसके जन्ममे ७ । २ । १२ । १ भावोंमे ग्रह हो तो छत्र योग करते हैं, जिसका

पूर्वोक्त पुण्य नक्षत्रका उदय होता है उसको ऐसा योग होता है ॥ ४३ ॥ जन्ममें लग्नगत क्रूरग्रह बृहस्पतिसे दृष्ट हो शुक्र कर्कका हो तो देवता ब्राह्मणोंका भक्त एवं बडे महल, बावली और नगर बनानेवाला राजा होवे ॥ ४४ ॥ एकभी शुभग्रह अपने उच्चमें हो, सूर्य केन्द्रमें बलवान् हो, उसे पंचम भावगत गुरु देखे तो मनुष्य राजा होवे ॥ ४५ ॥ जिसके जन्म समयमें मकरराशि छोडकर अन्य किसी राशिके लग्नमें बृहस्पति हो तो उस मनुष्यको उन्मत्त हाथियोंके समूहयुक्त राजा करता है ॥ ४६ ॥

**विहाय लग्नं परिपूर्णचन्द्रः केन्द्रस्थितो वीर्ययुतस्तु यस्य । प्रसूतिकाले कुरुते नृपालं लीलाविलासं कलितारिवृन्दम् ॥ ४७ ॥ सुरगुरुः सविधुर्जनने भवेद्यदि चतुष्टयगः सितवीक्षितः । अतुलकीर्तियुतो नृपतिर्भवेद्दिविचरो न च नीचगतः क्वचित् ॥ ४८ ॥ धनगताः सितजीवशशांकजा मदनगाः कुजमदनिशाकराः । भवति यस्य जनौ स तु भूपतिस्त्वरिगजप्रशमे च मृगाधिपः ॥ ४९ ॥**

जिसके जन्म समयमें लग्न छोडके केन्द्रमें पूर्ण चन्द्रमा बलशाली हो तो शत्रु समूहको नाश करके लीलविलास करनेवाला राजा होवे ॥ ४७ ॥ जन्ममें चन्द्रमा सहित गुरु, केन्द्रमें शुक्रसे दृष्ट हो और कोई ग्रह नीचका न हो तो असंख्य कीर्ति युक्त राजा होता है ॥ ४८ ॥ धन स्थानमें शुक्र, गुरु, बुध सप्तममें, मंगल, शनि, चन्द्रमा जिसके जन्ममें हो वह राजा शत्रुरूप हाथियोंके शमन करनेमें सिंह होवे ॥ ४९ ॥

**कुंभेऽन्त्यांशे यामिनीशे त्रिकोणे मेषे भाने मेदिनीनन्दने वा । सौम्ये द्वन्द्वे चैकविंशांशके वा भूपालः स्याद्भूमिपालः प्रजातः ॥ ५० ॥ कलशपंचदशांशगते शनावपि कुलीरकुजांशगते विधौ । धनुषि गाहिलवे विबुधार्चिते त्वलिभिभिगते ऽप्यथवा नृपः ॥ ५१ ॥ वर्गोत्तमः पूर्णबलः शशांको दास्रेऽथ पुष्येऽप्यथ कृत्तिकासु । करोति मर्त्यं खलु सार्वभौमं त्रिपुष्करोत्पन्ननरोऽपि भूपः ॥ ५२ ॥ भद्रातिथिः स्याद्विषमांघ्रिभं चेद्वारे-**

ऽर्कजीवारशनैश्चराणाम् । त्रिपुष्कराख्यः कथितो हि योगो वृद्धौ च हानौ त्रिगुणाप्तिकर्ता ॥ ५३ ॥ यद्वा सूतौ भार्गवो यस्य पुण्ये पूर्णश्चन्द्रश्चापि मेषूरणस्थः । अन्ये खेटा लाभसंस्था भवेयुः पृथ्वीनाथो भूपवंशप्रजातः ॥ ५४ ॥

कुम्भराशिके अत्यांश अर्थात् कुम्भकुम्भांशक वर्गोत्तममे चंद्रमा अथवा १२ वा १ राशिका मंगल त्रिकोणमे अथवा बुध मिथुनके २१ अंशपर हो तो राजवंशज राजा होवै ॥ ५० ॥ कुम्भके १५ अंशपर शनि, कर्कके १० अंशपर चंद्रमा, धनके ३ अंशपर गुरु हो तो राजा होवै अथवा इसी योगमे चंद्रमा सिंहमे हो तो भी राजा होवै ॥ ५१ ॥ अश्विनी, पुष्य अथवा कृत्तिकामे पूर्णबली वर्गोत्तमी चन्द्रमा हो तो चक्रवर्त्ती राजा होवै । त्रिपुष्कर योगमे उत्पन्न हुआ मनुष्यभी राजा होता है ॥ ५२ ॥ त्रिपुष्कर लक्षण कहते है कि, भद्रा २ । ७ । १२ तिथि, रवि, मंगल, गुरु, शनिवार और त्रिपाद नक्षत्र अर्थात् कृत्तिका पुनर्वसु विशाखा उत्तराफाल्गुनी उत्तराषाढा पूर्वाभाद्रपदा नक्षत्र हो तो त्रिपुष्कर योग होता है । यह वृद्धि तथा हानिमे त्रिगुण फल करता है ॥ ५३ ॥ अथवा जन्ममे नवम शुक्र पूर्ण चंद्रमा दशम और ग्रह लाभभावमे होवै तो राजवंशीय राजा होता है ॥ ५४ ॥

दोषाकरादुपचयेष्वखिलग्रहाश्चेद्भौमात्त्रिधर्मसुतगा धिषणेदुसूर्याः । कुर्वन्ति ते हि मनुजं धरणीपतीन्दुमुन्मत्तकुंजरतुरंगमसंपदाढ्यम् ॥ ५५ ॥ तुर्यास्थितौ बुधसितौ सहजेऽम्बुजेशास्तिष्ठंति पुष्करचराः सुतधाम्नि चान्ये । नीचेऽथवाऽरिसदने नहि कश्चिदत्र धात्रीपतिर्भवति चैककृताधिकारः ॥ ५६ ॥ हरिस्थितस्तिग्ममयूखमाली कुलीरगः कैरविणीपतिश्चेत् । निरीक्षितौ चित्रशिखण्डिजेन धराधिनाथं कुरुते तदानीम् ॥ ५७ ॥ शरासनस्थस्त्रिदशार्चितश्चेत्सोमात्मजः कर्कटगः प्रसूतौ । दृष्टौ च तौ भार्गवभूमिजाभ्यां नराधिनाथं कुरुत-

स्तदानीम् ॥ ५८ ॥ शशी झपस्थितो गुरुः कुलीरगः कविर्घटे । भवेज्जनौ नराधिपो द्विदंतवाजिसंयुतः ॥ ५९ ॥

समस्त ग्रह चन्द्रमासे उपचयमें हों और मंगलसे ३ । ९ । ५ भावोंमें शुक्र चन्द्रमा सूर्य हों तो मनुष्य उन्मत्त हाथी घोडाओंसे युक्त राजाओंमें चन्द्रमा जैसा होता है ॥ ५५ ॥ बुध, शुक्र चौथे भावमें, तीसरा सूर्य, अन्यग्रह पंचम भावमें हों यहां नीच शत्रु राशिका कोई हो तो पृथिवीमें एकाधिकारी राजा होवे ॥ ५६ ॥ सूर्य सिंहमें, चंद्रमा कर्कमें हो इनको गुरु देखे तो राजा करते है ॥ ५७ ॥ यदि गुरु धनमें, बुध कर्कमें हो इनको शुक्र मंगल देखे तो राजा करते है ॥ ५८ ॥ चंद्रमा मीनमें गुरु कर्कमें, शुक्र कुंभमें जन्ममें हो तो हाथी घोडाओंसे संयुक्त रहनेवाला राजा होवै ॥ ५९ ॥

सितेक्षितः शनिर्घटे सरोजिनीश्वरस्तनौ । जलंचरर्क्षगे विधौ यदा भवेन्नृपो वरः ॥ ६० ॥ खेचरो यदि च नीचभस्थित-स्तत्पतिस्तदपि तुंगनायकः । केन्द्रगौ हि भवतः समुद्भवे कीर्तितौ नृपतिसंभवाय तौ ॥ ६१ ॥ समीरपौष्णानिलजीव-भेषु नासत्यभे वा दनुजेन्द्रमंत्री । स्थितः प्रसूतौ मनुजं करोति नराधिपालं नृपवंशजातम् ॥ ६२ ॥ राज्योपल-ब्धिरपि कर्मगृहस्थितस्य यद्वा विलग्नगृहगस्य भवेद्दशा-याम् । वीर्यान्वितस्य खचरस्य तयोरभावे सद्राजयोग इह चेत्परिसूतिकाले ॥ ६३ ॥

शुक्रसे दृष्ट शनि कुंभका हो, लग्नमें सूर्य, जलचर राशिमें चंद्रमा हो तो मनुष्य राजा होवै ॥ ६० ॥ यदि कोई ग्रह नीच राशिमें हो तो उस राशिका स्वामी और उसके उच्चराशिका स्वामी यदि केंद्रमें हो तो राजा करते हैं ॥ ६१ ॥ स्वाती, रेवती, कृत्तिका, पुष्य, अश्विनीमेंसे किसी नक्षत्रमें शुक्र हो तो राजवंशीयको राजा करता है ॥ ६२ ॥ उक्त राजयोगोंके फल दशम-गत वा लग्नगत ग्रहकी दशामें होता है । लग्न दशममें ग्रह न हों तो बलवान् ग्रहकी दशामें होता है ॥ ६३ ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुंजराजोदिते च।
होरासारे शंभुहोराप्रकाशेऽध्यायः पूर्णो राजयोगाख्य आसीत् ॥६४॥

इति श्रीपुंजराजविरचिते शम्भुहोराप्रकाशे राजयोगाध्यायः सप्तदशः ॥ १७ ॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है ॥ ६४ ॥

इति श्रीशम्भुहोराप्रकाश माहीधरीभाषाटीकायां राजयोगाध्याय सप्तदश ॥ १७ ॥

---

## अथ सामुद्रिकाध्यायः १८।

यस्य प्रसूतिसमये प्रबला नृपालयोगा भवंति यदिवा पुरुषस्य नूनम्। सद्राजलाञ्छनवराणि पदे तदीये यद्वा भवन्त्यपि च पाणितलेऽमलानि ॥ १ ॥ अनामिकामूलगता रेखा पुण्याह्वया च सा। प्राप्ता मध्यांगुष्ठतोर्द्ध्वा मणिबंधं तु राज्यदा ॥ २ ॥ यवचिह्नं यदा यस्यांगुष्ठमध्ये विराजते। विनीतः स्याद्यशस्वी च स्ववंशाभरणं च सः ॥३॥ वैसारिणो वारणो वाऽऽतपवारणकं सृणिः। वीणा पुष्करिणी पाणौ चरणे स्युर्नराधिपाः ॥ ४ ॥ करवालादर्शमालाहलपर्वतवाजियत्। पाणौ चेन्नरनाथो वा मांडलीको यथाकुलम् ॥ ५ ॥ चेत्पाणौ चरणे च यस्य हि रथो दोला सरोजध्वजा चक्रं वा व्यजनासनानि च भवंत्येतानि चिह्नानि च। नूनं तस्य गृहे भवंति कमलालीलाविलासाङ्कुशं शालाः कुञ्जरसत्तुरंगमभवाः ख्याता महीमण्डले ॥६॥ स्तंभः कुंभः पादपो वा मृदङ्गः पाणौ दण्डो घोटको वा गदा चेत्। मर्त्त्योऽत्यर्थं राजते राजलक्ष्म्या ख्यातो नूनं पण्डितानां वरेण्यः ॥ ७ ॥

जिसके जन्ममें राजयोग होते है वे राजा होते है अथवा उनके हथेली वा पादतलमें राजलक्षण चिह्न होते हैं वे लक्षण कहते है ॥ १ ॥ अनामिकाके मूलमें पुण्यनाम रेखा होती है वह रेखा मध्यागुष्ठपर्यंत ऊपरको होकर

मणिबंधपर्यंत पहुंचे तो राज्य देती है ॥ २ ॥ जिसके अंगुष्ठमध्यमें यव ( जौ ) का चिह्न हो तो वह नम्र, यशस्वी और अपने वंशका भूषण होता है ॥ ३ ॥ जिनके हाथ वा पगमें मछली, हाथी, छत्र, अंकुश, वीणा, बावली हो वे राजा होते है ॥ ४ ॥ तलवार ( खंजर ), दर्पण, माला, हल, पर्वत, घोडाका चिह्न हो वह राजा ( वा माडलिक ) कुछ गांवका मालक कुलानुमान होता है ॥ ५ ॥ जिसके हाथ पगमें रथ, दोला, कमल, ध्वजा, चक्र वा पंखा, आसनके चिह्न हो उसके घरमें निश्चय लक्ष्मीकी क्रीडाके विलाससे अत्यर्थ हाथी घोडाओंसे अस्तबल ऐसे परिपूर्ण रहे कि, पृथ्वीमें विख्यात हो जावे ॥ ६ ॥ जिसके हाथमें स्तंभ, कुंभ, वृक्ष वा मृदंग, दंड, घोडा, गदाका चिह्न हो वह मनुष्य राजलक्ष्मीसे विराजित रहे और निश्चय ख्यात पंडितोमे श्रेष्ठ होवे ॥ ७ ॥

विशालभालश्चाकर्णनीलोत्पलदलेक्षणः । सुवृत्तमौलिश्चाजानुबाहुः स्यात्पुरुषश्च यः ॥८॥ तमाहुर्विबुधा भूमिमण्डलाखण्डलं नृपम् । नासा तु सरला यस्य शिलातलनिभं च हृत् ॥ ९ ॥ नाभिर्गभीरोऽतिमृदुश्चरणौ रक्तवर्णकौ । राजराजः स तु भवेन्नात्र कार्या विचारणा ॥ १० ॥ वंशाभिमानः समुदारचेताः प्रसन्नमूर्तिर्गुरुसाधुनम्रः । अनीतिभीरुः शुभवाग्विलासः साम्राज्यलक्ष्मीं लभते मनुष्यः ॥ ११ ॥ तिलः करतले यस्य विरलः स्याद्धनागमः । तिलः पादे नरेश स्याद्वाहनांकसमन्वितः ॥ १२ ॥ एतच्चिह्नं राजवंशोद्भवानां स्यान्मर्त्यानां तद्विदः संवदंति । स्वल्पं कल्प्य चाल्पवंशोद्भवानां मर्त्यानां वा स्वीयवंशानुमानात् ॥ १३ ॥ चिह्नानि यानि मुनिभिः प्रतिपादितानि व्यक्तानि तानि परिपूर्णफलप्रदानि । दक्षे करे च चरणे खलु मानवानां धन्यानि वंदिनयोश्च सुलोचनानाम् ॥ १४ ॥

जिसके बडा ललाट ( माथा), कानपर्यंत नीलकमलदलके समान नेत्र, [illegible] शिर, घुटनोपर्यंत बाहु हो उसको पंडितोंने सारी पृथ्वीका राजा

कहा है। जिसकी नाक सरल हो, छाती शिलातलके समान सरल, नाभि गहरी, चरण रक्त वर्ण एव कोमल हो वह राजाओंका राजा होता है इसमें विचार न करना ॥ ८ ॥ ९ ॥ १० ॥ जो मनुष्य अपने वशका अनुकूल अभिमानी अर्थात् उत्तम वशज हो, उदार मन, प्रसन्न चेहरा, गुरु जन, साधुजनोंके समक्ष नम्र अर्थात् भक्त हो, अन्यायसे डरता हो, सुन्दर वाणीके विलासवाला हो, वह बादशाही लक्ष्मीको पाता है ॥ ११ ॥ जिसके हाथमें तिल हो उसको धनागम कभी २ होवै, जिसके पैरमे तिल हो वह राजा वाहन, राजचिह्नोंसे युक्त रहै ॥ १२ ॥ ऐसे चिह्न राजवशवालोंके हो तो वही राजा होते है, अन्य वंशवाले थोडा पावते है अथवा वे अपने वंशानुमान ऐश्वर्य पावते है ॥ १३ ॥ जो चिह्न मुनिजनोंने कहे है वे पुरुषके वाहिने हाथ पैरमे, स्त्रियोंके बाये हाथ पैरोमे पूर्ण फल देते हैं ॥ १४ ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुञ्जराजोदिते च।
होरासारे शम्भुहोराप्रकाशे सामुद्राख्योऽध्याय आसीत्सुपूर्णः ॥१५॥

इति श्रीपुञ्जराजविरचिते शम्भुहोराप्रकाशे सामुद्रिकाध्यायोऽष्टादशः ॥ १८ ॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है ॥ १५ ॥

इति श्रीशम्भुहोराप्रकाशे माहीधरीभाषाटीकाया सामुद्रिकाध्यायोऽष्टादश ॥ १८ ॥

---

## अथ राजयोगभंगाध्यायः १९।

शत्रुराशिस्थितैर्वाथ नीचस्थितैः सर्वखेटैश्च वर्गोत्तमप्रच्युतैः।
सूतिकाले नृणां राजयोगालयं यांति निस्संशयं वाच्यमेतद्बुधैः ॥१॥
नक्षत्रेशं वाथ लग्नं यदैको नो संपश्येत्खेचरः सूतिकाले।
उक्ता ये वै राजयोगाश्च तेषां भंगं नूनं चाह पाराशराख्यः ॥ २ ॥
स्वांशं सूर्ये यामिनीशे विनष्टे पापैर्युक्ते सौम्यदृष्ट्या विहीने।
कृत्वा राज्यं प्रच्युतिं याति मर्त्यः पश्चाद्दुःखं प्राप्यतेऽसौ हताशः॥३
केतूदये व्यतीपात उल्कानिर्घातवासरे।
राजयोगेऽपि सूतिः स्यान्नरो दारिद्र्यभाग्भवेत् ॥ ४ ॥

भास्करः परमनीचमाश्रितो राजयोगदलनाय कीर्तितः ।
तद्वदेव धिषणः करोत्यलं राजयोगदलनं दरिद्रताम् ॥ ५ ॥
सूतिकाले भृगोः पुत्रः परमं नीचमाश्रितः ।
करोति मनुजानां च पतनं हि महत्पदात् ॥ ६ ॥
कुंभे लग्नेऽस्तं गते देवपूज्ये नीचर्क्षस्थाश्चेत्त्रय खेचरेन्द्राः ।
नैकोप्युच्चे खे च पापास्तदानीं राज्ञां योगा भंगमायांति तस्य ॥७॥
अस्तं यातैर्नीचगैर्वा शुभाख्यैः सर्वे पापाः केन्द्रसंस्था प्रसूतौ ।
सौम्याः खेटा रन्ध्रशत्रुव्ययस्था व्यर्थाः सर्वे राजयोगास्तदानीम् ॥८॥
चेल्लग्नस्थो राहुरिन्दुप्रदृष्टः षट्त्र्यायस्था लोहितांगारमंदाः ।
सौम्याः सूतावस्तगाः केन्द्रहीना राज्ञां योगा व्यर्थ एवेति वाच्यम् ॥९॥

राजयोगभंग कहते है कि, मनुष्योंके जन्मकालमें सभी ग्रह शत्रुराशियोंमें वा नीचराशियोंमें हों वर्गोत्तमांशमें न हों तो राजयोग भंग होजाता निःसन्देह पंडितोंने कहना ॥ १ ॥ यदि जन्म समयमें चन्द्रमाको तथा लग्नको एकभी ग्रह न देखे तो उक्त राजयोग भंग हो जाते हैं यह पराशर कहते हैं ॥ २ ॥ सूर्य अपने अंशकमें हो चन्द्रमा क्षीण पापदृष्ट शुभदृष्टिरहित हो तो मनुष्य प्रथम राज्य करके राज्यभ्रष्ट होवे, पीछे दुःख पाता है और आशा मारी जाती है ॥ ३ ॥ केतुके उदयमें, व्यतीपात योगमें, उल्कापात निर्घातदिनमें जिसका जन्म हो तो वह मनुष्य राजयोग होनेसे भी दरिद्र होवे ॥ ४ ॥ सूर्य परम नीचमें हो तो राजयोगभंग करनेवाला कहा है, ऐसाही गुरुभी राजयोगभंग तथा दरिद्रता करता है ॥ ५ ॥ जन्ममें शुक्र परमनीचका मनुष्योंको बडे पदसे पतन करता है ॥ ६ ॥ लग्न कुंभ हो, गुरु अस्तगत हो, तीन ग्रह नीचके हों, एक ग्रहभी उच्चमें न हो, दशममें पाप हो तो राजयोग भंग होता है ॥ ७ ॥ शुभग्रह अस्त हो वा नीचगत हों समस्त पाप केंद्रोमें हों और शुभग्रह ८।६।१२ भावोंमें हो तो सम्पूर्ण राजयोग भंग होते हैं ॥ ८ ॥ लग्नमें राहु चन्द्रमासे दृष्ट हो, ६।३।११ भावोंमें मंगल, सूर्य, शनि शुभग्रह अस्तगत एवं केन्द्ररहित हों तो राजयोग व्यर्थ होते हैं ॥ ९ ॥

केन्द्रेषु खेटरहितेषु शुभैर्नभोगैरस्तंगतैश्च यदि नीचगृह-स्थितैर्वा । यद्वा चतुर्दिविचरैररिमंदिरस्थैर्नाशं प्रयांति निखिलाः क्षितिपालयोगाः ॥ १० ॥

केन्द्रोंमे कोई ग्रह न हो शुभग्रह अस्त हो वा नीच राशियोमे हो अथवा चार ग्रह शत्रुराशियोमे हो तो संपूर्ण राजयोग नाश हो जाते है ॥ १० ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुञ्जराजोदिते च ।
होरासारे शम्भुहोराप्रकाशे भंगाध्यायो राजयोगस्य पूर्णः॥११॥

इति श्रीपुञ्जराजविरचिते शम्भुहोराप्रकाशे राजयोगभंगाध्याय एकोनविंशः ॥१९॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है ॥ १८ ॥

इति श्रीशंभुहोराप्रकाशे माहीधरीभाषाटीकायां राजयोगभंगाध्याय एकोनविंश ॥ १९ ॥

## अथ पंचमहापुरुषलक्षणाध्यायः २०।

ये वै महापुरुषसंज्ञकभूमिपालाः पंचैव पूर्वमुनिभिः किल संप्रदिष्टाः। वक्ष्याम्यहं सुसरलामलकोक्तिभिस्तान् सद्राज-योगविधिदर्शनलिप्सया च॥१॥स्वर्क्षोच्चाश्रयकेन्द्रस्थैरुच्चगैर्वा कुजादिभिः। क्रमाद्रुचकभद्राख्यहंसमालव्यशाशकाः ॥ २ ॥

जो महापुरुषसंज्ञक राजयोग है वे पूर्वाचार्योंने पांचही कहे है । उनको सुंदर निर्मल कोमल उक्तिमे उत्तम राजयोग दिखानेकी इच्छासे कहता हूं ॥ १ ॥ मङ्गलादिक ग्रह अपनी राशि या अपने उच्चमे स्थित होकर लग्नसे केन्द्रमे पडे हो अथवा जिस किसी स्थानमे अपने उच्चके हो तो क्रमसे रुचक १, भद्र २, हंस ३, मालव्य ४, शशक ५, ये पांच महापुरुषयोग होते है. अर्थात् मङ्गल स्वराशिस्थ या स्वोच्चस्थ होकर केन्द्रमे हो तो रुचक, बुध हो तो भद्र, बृहस्पति हो तो हंस, शुक्र हो तो मालव्य और शनि अपने राशि या अपने उच्चके होकर केंद्रमे हो तो शशक ये पांच योगक्रमसे होते है । अथवा जिस किसी स्थान स्थितभी भौमादिक ग्रह अपने उच्चमे पडे हो तोभी क्रमसे पूर्वोक्त पांचो योग होते है ॥ २ ॥

अथ रुचकयोगफलम् ।

रक्तश्यामो दीर्घवक्त्रोऽतिरक्तवीर्यः शुभ्रो नीलकेशोऽतिशूरः । मंत्राभिज्ञः कंबुकंठो महौजाः क्रूरोऽत्यर्थं साहसावाप्तसिद्धिः ॥ ३ ॥ भक्तो विप्राचार्यवृन्दारकाणां मर्त्योऽत्यर्थं शत्रुवीर्यस्य हंता । चंचत्कीर्तिश्चारुकीर्तिः समानहस्तांघ्रिः स्याल्लोमजानूरुजंघाः ॥ ४ ॥ वीणाशंखश्चापखट्वांगपाशगोवज्राख्यैश्चिह्नितः पाणिपादः । कौशल्यः स्याद्यंत्रमंत्राभिचारे तन्मध्यं स्याद्वक्त्रदैर्घ्येण तुल्यम् ॥ ५ ॥ सह्यस्य विंध्यसहितस्य तथोज्जयिन्या ईशश्च वत्सरकसप्ततिर्जीवितोऽसौ । शस्त्राग्निचिह्नसहितो रुचकाभिधाने देवालये हि निधनं खलु स प्रयाति ॥ ६ ॥

रुचक योगवाला मनुष्य रक्तश्याम रंग, लंबा मुख, सुर्खरंग वीर्य, सुंदर, नीले केश, अति शूरमा, मंत्र जाननेवाला, शंखके समान कण्ठ, बडा तेजस्वी, क्रूरसाहससे सिद्धि प्राप्त होवे ॥ ३॥ ब्राह्मण, गुरु देवताओंका भक्त, अत्यर्थ शत्रुबलका मारनेवाला, देदीप्यमान सुन्दर कीर्ति, हाथ पैर सरल, ऊरु, जंघा, रोम समान ॥ ४ ॥ वीणा, शंख, धनुष्य, खट्वांग, पाश, गौ, वज्रके चिह्नोंसे युक्त हाथ पैरवाला, यंत्र, मंत्र जादूगरीमें चतुर होवे, उसका कटिभाग मुखकी लंबाईके समान होवे ॥ ५ ॥ विंध्यसहित सह्यपर्वत और उज्जयिनीका राजा होवे, ७० वर्ष जीवे, शस्त्र अग्निका चिह्न अंगमें हो, देवालयमें मृत्यु होवे ॥ ६ ॥

अथ भद्रयोगफलम् ।

शार्दूलप्रतिमाननो द्विपगतिः पीनोरुवक्षस्थलो लंबापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः । कामी कोमलसूक्ष्मरोमनिचयैः संरुद्धगंडस्थलः प्राज्ञः पंकजगर्भपाणिचरण सत्त्वाधिको योगवित् ॥ ७ ॥ शंखासिकुञ्जरगदाकुसुमेषुकेतुचक्राब्जलांगलविचिह्नितपाणिपादः । यात्रागजेन्द्रमदवारि-

कृतार्द्रमूर्त्तिः सत्कुंकुमप्रतिमगंधतनुः सुघोषः ॥ ८ ॥ सद्भ्रू-युगोऽतिमतिमान् खलु शास्त्रवेत्ता मानोपभोगसहितोऽपि निगूढगुह्यः । सत्कुक्षिधर्मनिरतः सुललाटपट्टो धीरो भवेद-सितकुंचितकेशपाशः ॥९॥ स्वतंत्रः सर्वकार्येषु स्वजनं प्रति न क्षमी । भुज्यते विभवस्तस्य नित्यमार्थिजनैः परैः ॥ १० ॥
भारं तुलायां तुलयेत्सुरत्नैः श्रीकान्यकुब्जाधिपानिर्भवेत्सः ।
भद्राद्भवः पुत्रकलत्रसौख्यो जीवेन्नृपालः शरदामशीतिः ॥ ११ ॥

भद्रयोगवाला पुरुष सिंहके समान मुख, हाथी समान गति, नितब और छाती ऊचे, दोनो बाहु लबे और मोटे, उन्हीके तुल्य ऊचा अर्थात् दोनो बाहु लबे करके जितना हो उतनाही ऊचा होवै । कामी, बारीक और कोमल रोमसमूहसे गंडस्थल ढका हो । विद्यावान्, कमलके गर्भसदृश लालिमा युक्त हाथ और पैर हो, सत्त्वगुणाधिक, योग जाननेवाला ॥ ७ ॥ शंख, तलवार, हाथी, गदा, पुष्प बाण, ध्वजा, चक्र, कमल, हलका चिह्न, हाथ पैरमे तथा यात्रा हाथियोके मदजलसे गीली मूर्त्तिवाली है, शरीरमे उत्तम केसरकी गध आवै, वाणीका सुदर शब्द होवै ॥ ८ ॥ सुंदर भ्रूकुटी, अतिबुद्धिमान्, शास्त्रज्ञ, सन्मान और भागसे युक्त, गूढ गुह्यदेश, सजीली कुक्षि, धर्ममे तत्पर, सुदर ललाट, धीर, कृष्ण और घुघराले बाल ॥ ९ ॥ सब कामोमे स्वतत्र, अपने मनुष्योमे क्षमारहित रहे, उसके ऐश्वर्यको सर्वदा याचकलोग भोगे ॥ १० ॥ रत्नोके भारको तराजूसे तोले, कान्यकुब्ज-देशका राजा होवै, मगल करनेवाला, पुत्र कलत्र सुखवान् होवै और वह राजा ८० वर्षपर्यत जीता रहे ॥ ११ ॥

अथ हसयोगफलम् ।

रक्तश्चोन्नतनासिकः सुचरणे हंसे प्रसन्नेंद्रियो गौरः पीनकपोल-रक्तकरजो हंसस्वनः श्लेष्मलः । शंखाब्जांकुशमत्स्यदाम-युगकैः खट्वांगमालाघटैश्चंचत्पादकरस्थले मधुनिभे नेत्रे सुवृत्तं शिरः ॥ १२ ॥ जलाशये प्रीतिरतीव कामी न याति तृप्तिं वनितासु नूनम् । उच्चोऽङ्गुलैर्वै षडशीतितुल्यैरायुर्भवेत्

पण्णवर्तः समानाम् ॥ १३ ॥ बाह्लीकदेशान्वरशूरसेनान् गांधर्वगंगायमुनांतरालान् । भुक्त्वा वनांते निधनं प्रयाति हंसोऽयमुक्तो मुनिभिः पुराणैः ॥ १४ ॥

हंसयोगवाला मनुष्य ताम्रवर्ण, ऊंची नाक, सुंदर कोमलचरण, प्रसन्न इंद्रिय गण, गोरा ऊंची गाल, हथेली रक्तवर्ण, हंसके समान स्वर, श्लेष्मप्रकृति, हाथ, पैर शंख, कमल, अंकुश मछली, रस्सी धनु, खट्वांग माला, घडेके चिह्नसे शोभायमान रहे, नेत्र मधुदके सदृश रंगके और शिर सुंदर वृत्ताकार होवे ॥ १२ ॥ जलाशयमें प्रीति, अतिकामी स्त्रियोंमें तृप्त न होवे, ८६ अंगुल ऊंचा शरीर होवे । आयु९६ वर्षकी होवे ॥ १३ ॥ बाह्लीक देश, शूरसेन देश, गांधर्व देश और गंगा यमुनाके बीचके देशोंका राज्य भोगके वनमें मृत्युको प्राप्त होवे यह हंसयोगका फल प्राचीन मुनियोंने कहा है ॥ १४ ॥

अथ मालव्ययोगफलम् ।

अस्थूलोष्ठो न विषमवपुर्नैव रिक्तांगसंधिर्मध्ये क्षामः शशधररुचिर्हस्तिनादः सुगंडः । सदीप्ताक्षः समसितरदो जानुदेशातपाणिर्मालव्योऽयं विलसति नृपः सप्ततिर्वत्सराणाम् ॥ १५ ॥ वक्त्रं त्रयोदशमितांगुलमस्य दैर्घ्यं तिर्यग् दशांगुलमितं श्रवणांतरालम् । मालव्यसंज्ञनृपतिः स भुनक्ति नूनं लाटांश्च मालवकसिंधुसुपारियात्रान् ॥ १६ ॥

मालव्ययोगवाला मनुष्य पतले ओठ, सरल शरीरवाला, अंगोंकी संधियां भरी, कमर पतली, चंद्रमाके समान कांतिमान, हस्तिनीकीसी वाणी, सुंदर गंडस्थल, देदीप्यमान नेत्र, सम एवं श्वेत दांत, हाथ घुटनोंतक लंबे होते हैं, ७० वर्षपर्यन्त राजत्वमें विराजता है ॥ १५ ॥ मुखकी लंबाई १३ अंगुल और तिर्छा १० अंगुल परिमित कानोंतक होती है यह मालव्यसंज्ञक राजा लाटदेश मालवा, सिन्धु, पारियात्र देशोंको भोगता है ॥ १६ ॥

अथ शशकयोगफलम् ।

लघुद्विजास्यः सुभगः सकोपः शठोऽतिशूरो विजनप्रचारः । वनाद्रिदुर्गेषु नदीषु शस्तः प्रियातिथिर्नातिलघुः प्रसिद्धः ॥ १७ ॥

नानासेनानिचयनिरतो दंतुरश्चापि किंचिद्धातोर्वादे भवति कुशलश्चञ्चलं कोलनेत्रः । स्त्रीसंसक्तः परधनहरो मातृभक्तः सुजवो मध्ये क्षामः सुललितमती रंध्रवेदी परेषाम् ॥ १८ ॥ पर्यंकशंखशरशस्त्रमृदंगमालावीणोपमाः खलु करे चरणे च रेखाः । वर्षाणि सप्ततिमितानि करोति राज्यं संज्ञः शशाख्यनृपतिः कथितो मुनीन्द्रैः ॥१९॥ केन्द्रोपगा यद्यपि भूसुताद्या मार्तण्डशीतांशुयुता भवंति । कुर्वंति नोर्वीपतिमात्मपाके यच्छंति ते सत्फलमेव पुंसाम् ॥ २० ॥

शशक सञ्ज्ञकराजा छोटे दांत, छोटा मुख, सुभग, कोपसहित, धूर्त, अति शूरमा, वनमे फिरनेवाला, वन, पर्वत, किला और नदियोमे प्रसन्न रहनेवाला, अतिथियोको प्रियमाननेवाला हो । अतिह्रस्व शरीर न होवै, प्रसिद्ध होवै ॥ १७ ॥ अनेक प्रकारकी सेनासमूहमे रतरहे, किंचित् (दतुर) बाहरकी ओर दातवाला, धातुवादमे चतुर, चञ्चल शूकरकेसे नेत्रका, स्त्रीमे आसक्त, पराये धनका हरण करनेवाला, माताका भक्त, सुडौल जानुदेश, कटिभाग माडा, सुदर ललित बुद्धि और दूसरोका छिद्र जाननेवाला होवै ॥ १८ ॥ हाथ पैरोमे पलग, शख, बाण, शस्त्र, मृदग, माला, वीणासरीखे चिह्न होवै, ७० वर्षपर्यन्त राज्य करता है यह शशसज्ञक राजा मुनीद्रोने कहा है ॥ १९ ॥ यदि सूर्य चंद्रमा सहित भौमादि ग्रह हो तो राजा नहीं करते, केवल स्वदशामे अन्यप्रकार शुभफल देते है ॥ २० ॥

विद्वद्रम्ये खेटलीलाविलासे सम्यग्बोधे पुञ्जराजोदिते च ।
होरासारे शम्भुहोराप्रकाशेऽध्यायः पूर्णो वै महापूरुषाख्यः ॥ २१ ॥

इति श्रीपुञ्जराजविरचिते शम्भुहोराप्रकाशे पञ्चमहापुरुषलक्षणाध्यायो विंशः ॥ २० ॥

विद्वद्रम्येत्यादिका अर्थ पूर्ववत् है ॥ २१ ॥

इति श्रीशम्भुहोराप्रकाशे माहीधरीभाषाटीकाया पञ्चमहापुरुषलक्षणाध्यायो विंश ॥ २० ॥

श्रीवैक्रमेऽश्विरसनन्दकुसंमितेऽब्दे होराप्रकाशविवृतिर्नृगिरा व्यतानि । धर्माधिकारिपदधारिमहीधरेण श्रीकीर्तिशाह-नृपतेर्नगरे टिहर्य्याम् ॥ १ ॥ नानादायैरायुषो निर्णयोऽस्मिन् ग्रन्थेऽन्येभ्यो जातकेभ्यो विशेषात् । योगादिभ्यः खेटपाक-व्रजश्चागादि व्याख्योदाहृतिर्मूलमात्रात् ॥ २ ॥ यदत्र चापलं मे स्याच्छोधयंतु विपश्चितः । तथा लोकोपकाराय भूया-देष परिश्रमः ॥ ३ ॥

भाषाकारकी उक्ति है कि, श्रीविक्रमसंवत् १९६२ में धर्माधिकारिपद-युक्त महीधरने श्रीमान् कीर्तिशाहमहाराजकी राजधानी टिहरी नगरमें इस शंभुहोराप्रकाश ग्रन्थकी भाषाटीका बनाई ॥ १ ॥ इस ग्रन्थमें अनेक प्रकारकी दशाओंसे आयुका निर्णय एवं योगादियोंकरके ग्रहफलसमूह अन्य जातकोंकी अपेक्षा विशेषतासे है परन्तु टीकादिरूपसे कुछ नहीं थी इसलिये इसकी भाषाव्याख्या उदाहरणसहित मूलमात्रसे करी है ॥ २ ॥ इसमें जो कुछ त्रुटि रहगई हो उसे विद्वान् लोग शुद्ध करें और यह मेरा परिश्रम लोकोपकारके लिये होवे ॥ ३ ॥ इति शुभम्.

समाप्तश्चायं ग्रन्थः ।



पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास, "लक्ष्मीवेंकटेश्वर" स्टीम्-प्रेस, कल्याण-बंबई.

खेमराज श्रीकृष्णदास, "श्रीवेंकटेश्वर" स्टीम्-प्रेस, खेतवाडी-बंबई.